देवचन्द्र लालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः ४०

...मगणिविरचितो

# धर्मकल्पद्रुमः

अस्य प्रकाशकः–शाह नगीनभाई घेलाभाई जव्हेरी अस्यैकः–कार्यवाहकः।

इदं पुस्तकं शाह नगीनभाई घेलाभाई जव्हेरी, इत्यनेन, मुंबई फोर्ट सासुन बिल्डिंग नं० ८ इत्यत्र " गुजराती " मुद्रणालये मणिलाल इच्छाराम देसाईद्वारा मुद्रापितं, मुम्बय्याम् ४२६ जव्हेरी बाजार इत्यत्र प्रकाशितं च



भगवद्वीरस्य २४४३ विक्रमनृपस्य १९७३ इसुख्रिस्ते १९१७

प्रति ५०० निष्क्रय रूप्यक एक मोहमयीपत्तने



# श्रेष्ठी देवचंद लालभाई जव्हेरी.

| जन्म १९०९ वैक्रमाब्दे | निर्वाणम् १९६२ वैक्रमाब्दे |
|---|---|
| कार्तिकशुक्लैकादश्याम्, सूर्यपुरे. | पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |

## The Late Sheth Devchand Lalbhai Javeri.

Born 1853 A D Surat — Died 13th January 1906 A D. Bombay.

The Bombay Art Printing Works, Fort.

# धर्मकल्पद्रुमस्योपोद्घातः ।

श्रीगणधरेन्द्रो विजयतेतराम् ।

ग्रन्थोऽयं वाचनाय यथायोगं श्रद्धाशुद्धये च समर्प्यते रादसद्विवेचकानां विचक्षणानां, ज्ञापितं चात्र समसङ्गं दानशीलतपोभावानां शाखाभिरुपमितानां सोदाहरणं माहात्म्यं धर्मकल्पद्रुमाभिधाने वाङ्मये ग्रन्थकर्त्रा, यद्यपि ग्रन्थकृदयमागमिकाभिधमतान्तःपाती तथापि नात्र तथाविधमुदाहृतं भव्यानां श्रद्धाबाधाविधायि न चात्र रचनाकौशलमलङ्कारादिचमत्कृतिर्वा, अनेकत्र ग्राम्योक्तिः प्रचुरतया पूरिता, तथापि बालानामल्पसंस्कृतबुद्धीनां मनोरथपूर्त्यै भवितेति विमृश्यारब्धो मुद्रितुं श्रीमन्मोहनलालजीपुस्तकालयादृहीत्वाऽशुद्धतमं एतद्भाण्डागारीयनियुक्तेन लिखितः श्रीमल्ललितविजयाख्येन मुनिवर्येण शोधितुमारब्धो मया संपूर्त्तिमानीतः अशुद्धतमाभ्यां प्रतिभ्यां संमील्य पट्पत्रीणां कासाञ्चिदन्त्यानामवलोकनेन, आलोक्य भद्रा अवाप्नुवन्तु भद्रं भद्रश्रद्धानाः यथायथं गुणग्रहणोद्यताः, ग्रन्थकर्तुस्तथाप्रसिद्धय-भावात् तच्छाखायाः प्राग्ग्रन्थेषु जैनतत्त्वादर्शे च प्रतिपादनात् प्रतिपादने च दोषपोषसंभावनासंभवात् विरम्यते, केवलमेतदर्थयतेऽयं जनो यदुतास्थाय सर्वज्ञोक्तमवितथं मतं यतन्तां यतायता जना निःश्रेयसायामुपश्रुत्येति शमाभिलाषुकः श्रीश्रमणसङ्घभट्टारकस्य किङ्कर आनन्दः श्रीकर्यां त्रिसप्तत्यधिकैकान्नविंशे ( विक्रमार्क १९७३ ) शते मार्गशीर्षशुक्लत्रयोदश्याम् छायापुर्याम् लिखति ॥

श्रीमदुदयधर्मगणिविरचितम्–

# श्रीधर्मकल्पद्रुमनाम महाकाव्यम्.

॥ श्रीपार्श्वनाथाय नमः। श्रीगुरुभ्यो नमः ॥

श्रिय दिशतु वो नित्य, श्रीनाभेयजिनेश्वर । युगादौ प्रकटीचक्रे, धर्म्मो येन सुखावह ॥ १ ॥
शान्तिनाथो जिन शान्त्यै, भवताद्भवपारद । यस्य कान्त्या जितो मेरुस्तिष्ठत्यद्यापि निश्चल' ॥ २ ॥
राज्य प्राज्यमपि त्यक्त्वा, जित्वा यो मदन भटम् । भेजे चारित्रसाम्राज्य, श्रीनेमिं नौमि त मुदा ॥ ३ ॥
दुष्टारिष्टहरो लोके, मनोवाञ्छितदायक । श्रीपार्श्व पातु वो नित्य, जीरापल्लिविभूषण ॥ ४ ॥
आत्मनोऽभ्यधिक दृष्ट्वा, सिंहो यस्य पराक्रमम् । करोत्यङ्कमिषात्सेवा, स वीरोऽस्तु वरप्रद ॥ ५ ॥
श्रीअजितादयोऽप्यन्य, जिना विजितमन्मथा । मोक्षलक्ष्मीप्रदातारो, भवन्तु भविनां मुदे ॥ ६ ॥

श्रीकामधेनुकल्पद्रुचिन्तामणिसमः सदा । चिन्तितार्थप्रदो ध्येयः, श्रीगौतमगणाधिपः ॥ ७ ॥
यस्याः प्रसादतो ग्रन्थान्, रचयन्ति कवीश्वराः । सारदा वरदा सास्तु, शास्त्रसागरपारदा ॥ ८ ॥
धर्मः शर्मप्रदो लोके, धर्मो दुष्कर्मघातकः । धर्मो माता पिता स्वामी, धर्मो जयति सर्वदा ॥ ९ ॥
त्रिविष्टपमयी भूमिः, पुरं श्रीजैनशासनम् । विनयक्षान्तिमद्वृत्तपवित्रजनपूरितम् ॥ १० ॥
ज्ञानपीठं हृदस्थानं, तद्व्याख्या वेदिका वरा । सिंहासनं विचारः स्यात्, सम्यक्त्वं छत्रमुत्तमम् ॥ ११ ॥
पट्टदेवी मनःशुद्धिः, कुमारः सुकृतोदयः । विवेकश्रीर्महामात्यः, सिद्धान्तः सन्धिकारकः ॥ १२ ॥
सद्गुणाः सैन्यं भवेद् यस्य, सोऽयं श्रीधर्मभूपतिः । संसेव्यतां प्रतिदिनं त्वते स्वर्ग्यां, यथा ॥ १३ ॥

॥ चतुर्भिः कलापकम् ॥

अस्य श्रीधर्मभूपस्य, यो हि नाज्ञां विलङ्घयेत् । नाऽऽप्नोति परं सौख्यं, विषमेऽपि कलौ युगे ॥१४॥

यतः—

निर्बीजा पृथिवी गतौषधिरसा विप्रा विकर्मस्थिता, राजानोऽर्थपराः कुधर्मनिरता नीचा महत्त्वं गताः, ।

भार्या भर्तृषु वञ्चनैकहृदया पुत्रा पितुर्द्वेषिण , इत्येव समुपागते कलियुगे धन्य॰ स्थिति नो त्यजेत् ॥१५॥
एव हि विषमे काले, यो धर्म्मं नैव मुञ्चति । स ससारसमुद्रस्य, पारगामी भवत्यलम् ॥ १६ ॥

यत श्लोक –धर्म्माज्जन्म कुले कलङ्कविकले जाति सुधर्म्मात्परा,
धर्म्मादायुरखण्डित गुरु बल धर्म्माच्च नीरोगता ।
धर्माद्वित्तमनिन्दित निरुपमा भोगा सुकीर्त्ति सुधी ,
धर्मादेव च देहिना प्रभवत स्वर्गापवर्गावपि ॥ १७ ॥ यत॰—

बन्धुर्वैरिजनायते गुणवती कान्ता च सर्प्पायते मित्र चापि खलायते गुणनिधि. पुत्रोऽप्यमित्रायते
श्रीखण्ड दहनायते श्रवणयो. सूक्त तु शूलायते । जाते पुण्यविपर्यये तनुभृतामर्थोऽप्यनर्थायते ॥ १८ ॥
एव लोके फल व्यक्त, दृश्यते पुण्यपापयो । विचार्यैतत्ततो धीमान् , यथा लाभस्तथाचरेत् ॥ १९ ॥
यतः–कृत्याकृत्य विचारस्य, ज्ञातार स्वयमुत्तमा । मध्यमाश्चान्यकथनात्, कथचिन्नाधमा पुन॰ ॥२०॥
अन्यच्च–सिहस्य सारमेयस्य, तुरङ्गस्य खरस्य च । सुवर्णस्य पित्तलस्य, करिण कासरस्य च ॥ २१ ॥

इन्द्रनीलस्य काचस्य, मरालस्य वकस्य च । कल्पद्रोश्च करीरस्य, तेजसस्तमसोऽपि च ॥ २२ ॥
यथा दुग्धस्य तक्रस्य, दृश्यते महदन्तरम् । तथा श्रीजैनधर्मस्य, मिथ्याधर्मस्य चान्तरम् ॥ २३ ॥
॥ त्रिभिर्विशेषकम् ॥

क्वैरावतः क्व च हुण्डः ?, क्व समुद्रः क्व गोष्पदम् । क्व गरुत्मा च क्व मशकः?, क्व नागेशः क्व राजिलः?॥२४॥
क्व पीयूषं क्व सौवीरं? क्व मेरुः क्व च सर्षपः? । क्व श्रीजिनोदितो धर्मः, क्व चान्यो हिंसया युतः ॥ २५ ॥

काव्यम्—पृथ्वीकायाम्बुकाया जिनवरगदितास्तेजसोवायुकाया,
वानस्पत्याश्च जीवास्त्रिभुवनविदिता द्वीन्द्रियाद्यास्त्रसाश्च ।
रक्षन्ते बन्धुबुद्ध्या निजसदृशतया यत्र तु प्राणभूता,
धर्माणामेष चूडामणिरिव जयति श्रीजिनेशस्य धर्मः ॥ २६ ॥

आकृष्टिर्विद्या लक्ष्मीणां, वज्रं दारिद्र्यभूभृतः । कार्मणं शर्मणामेकं, धर्मः स्वर्गापवर्गदः ॥ २७ ॥
धर्मस्यैतस्य माहात्म्यमुच्यते लेशतो मया । पादप्रसारणं यस्माद्भवेत्सौऽ्यनुमानतः ॥ २८ ॥

पूर्वं कविवरा आसन्, प्राप्तश्रीभारतीवरा । क्षीराब्धिसन्निभा ग्रन्था, भूरिशस्तैर्विनिर्मिता ॥ २९ ॥
तेषा हि स्पर्धया ग्रन्थ, कुर्वन् यास्यामि हास्यताम् । इच्छन् सत्फलमूर्ध्वस्थ, गृहीतुमिव वामन ॥३०॥
स्पृहा कुर्वे विना नाव, तरीतु फलकेऽम्बुधिम् । स्वल्पबुद्धिरह किञ्चित्, धर्मव्याख्याकृतेच्छया ॥ ३१ ॥
वातोन्नापितपानीयकणानिच्छन्ति वा यथा । ग्रहीतु कोऽपि वा नीरसस्थित चन्द्रमण्डलम् ॥ ३२ ॥
तथाह मुखरीभूय, मूर्ख स्वल्पश्रुतोऽपि च । नवीनग्रन्थकरणे, कुर्वे वाञ्छागतत्रप ॥ ३३ ॥
तथापि गुरुसानिध्यात्, श्रीसङ्घानुमतेन च । करोमि मुग्धबोधार्थं, सुगम सुकथानकम् ॥ ३४ ॥
क्षन्तव्यं तद्बुधै सर्व, मया मूर्खेण यत्कृतम् । दया विधाय दीनस्य, दोषो वाच्यो न तै कदा ॥ ३५ ॥
सन्तः स्वभावतो विश्वे, दोषाच्छादनतत्परा । निर्मिता जगत कर्त्रा, महीमण्डनमौक्तिका ॥ ३६ ॥
यत पूर्वशास्त्रानुमानेन, धर्मकल्पद्रुमाभिधम् । धर्माख्यानमथो वच्मि, नवपल्लवसयुतम् ॥ ३७ ॥
बीज जीवदया यस्य, सद्वृत्त कन्द उच्यते । लज्जा स्तम्भो दृढ ज्ञेय , सद्बुद्धिस्त्वक्प्रकीर्त्तिता ॥३८॥
दानशीलतपोभावा, मुख्यशाखाचतुष्टयम् । विचाराचारविनया , प्रतिशाखाशत मतम् ॥ ३९ ॥

जीवाजीवादितत्त्वानि जिनपूजादिकं पुनः । भावना द्वादशैवं च, पत्राणि विविधान्यपि ॥ ४० ॥
विवेकादिगुणौघोऽस्य, नवीनः किसलोच्चयः । सज्जन्म स्वर्गसौख्यानि, यस्य पुष्पाणि भूतले ॥ ४१ ॥
अक्षयं सुखमाप्नोति, नरो मोक्षस्य यत्सदा । फलं पुण्यतरोरेतत्कथितं श्रीजिनागमे ॥ ४२ ॥
मित्रपुत्रकलत्राणि, बान्धवाः स्वजनाः धनम् । धान्यं चेति गृहस्थानां, छाया यस्य सुशीलता ॥ ४३ ॥
मनःशुद्धिपयःपूराद्वृधिं गच्छति यः सदा । दीनानाथविहङ्गानामाधारः सर्वदापि यः ॥ ४४ ॥
यत्फलास्वादनं रम्यं, जीवाः कुर्वन्त्यनेकशः । सप्तक्षेत्रमयी शुद्धा, भूमिर्दोषविवर्जिता ॥ ४५ ॥
भो भव्याः ! श्रूयतां सम्यङ्मानसे दम्भवर्जिते । धर्मकल्पद्रुमः सोऽयं, सेवनीयः सदादरात् ॥ ४६ ॥
॥ नवभिः कुलकम् ॥

श्रेयः सौभाग्यमग्र्यं ललितयुवतयश्चित्रवस्त्राणि हारा,
छत्रं चञ्चत्तुरङ्गमदकलकरिणः काञ्चनं शुद्धगेहम् ।
सौख्यं लक्ष्मीः प्रभूता प्रवरकनकभाः शुभ्रकीर्तिश्चलोके,

श्रद्धा सद्धर्ममार्गे भवति ननु फल धर्मकल्पद्रुमस्य ॥ ४७ ॥

अथच—सप्तविंशति भानिन्दुवत्सप्तविंशति भवान् । भ्रान्त्वा भास्वत्पद भेजे, यः श्रीवीर श्रियेऽस्तु व॥

एकदा श्रीमहावीरः, पावयन् पृथिवीतलम् । सुरसञ्चारितस्वर्णकमलेषु पदौ न्यसन् ॥ ४९ ॥

विहरन् वसुधापीठे, भव्यसत्वान् प्रवोधयन् । ययौ स्वजन्मन स्थाने, ग्रामे क्षत्रियकुण्डले॥५०॥

॥ युग्मम् ॥

सुरासुरनरै युक्त, सेवितो गौतमादिभि । तत्रैव समवासार्षीत्, सिध्धार्थोद्यानभूमिषु ॥५१ ॥

देवैः समवसरण, रचित विधिवत्तदा । सहस्रांशुरिव स्वामी, पूर्वं सिंहासन श्रितः ॥ ५२ ॥

चतु षष्टिसुरेन्द्राश्च, मिलितास्तत्क्षणादपि । देवदुन्दुभिमुख्यानि तत्रा वाद्यान्यवादयन् ॥ ५३ ॥

प्रभोरागमन ज्ञात्वा, वनपालेन वेगत । नन्दिवर्धनभूपालो, विज्ञप्तो विनयादिति ॥ ५४ ॥

उल्लसद्रोमकूपोऽथ, वनपालाय भूपति । सार्धद्वादशलक्षाणि, सुवर्णस्य ददौ मुदा ॥ ५५ ॥

दत्त पश्चाङ्गप्रासाद , स्वर्णजिह्वान्वित पुन । ससैन्य सोत्सव राजा, ययौ वन्दनहेतवे ॥ ५६ ॥

तस्मिन्नेव क्षणे तत्र, राजा श्रीहस्तिपालकः । अकस्मादगमद्दक्षः, पापापुर्यां नरेश्वरः ॥ ५७ ॥
श्रीवीरागमनं ज्ञात्वा, भूत्वा, प्रमोदमेदुरः । तदा च श्रेणिकः श्रीमान्, आगतो मगधेश्वरः ॥ ५८ ॥
तत्र त्रयोपि भूपाला, मिलितावीरवन्दने । स्वर्णसौगन्धिकं जातं, हर्षितो नन्दिवर्धनः ॥ ५९ ॥
यतः—सद्यः प्रीतिकरो नादः, सद्यः प्रीतिकरास्त्रियः । सद्यः शीतहरो वह्निः सद्यः पापहरो जिनः ॥६० ॥
पञ्चाभिगमपूर्वञ्च, दत्वा तिस्रः प्रदक्षिणाः । ते त्रयोऽप्यथ संभूय, वीरपादान् ववन्दिरे ॥ ६१ ॥
दर्शनाद्देवदेवस्य, ते भूपा हृष्टमानसाः । स्तुतिञ्च चक्रिरे भक्त्या, योजयित्वा करौ निजौ ॥ ६२ ॥
सुप्रभातं सुदिवसं, कल्याणं मेऽद्यमङ्गलम् । यद्वीतराग ! दृष्टोऽसि, त्वं त्रैलोक्यदिवाकरः ॥ ६३ ॥
अद्य छिन्ना मोहपाशा, अद्य रागादयो जिताः । अद्य मोक्षसुखञ्जातमद्य तीर्णो भवार्णवः ॥ ६४ ॥
मनः प्रसन्नं संपन्नं, नेत्रे पीयूषपूरिते । अहं स्नातः सुधाकुण्डे, जिनेन्द्र ! तव दर्शनात् ॥ ६५ ॥
इति स्तुत्वा जगन्नाथं, कुर्वाणाः सफलं भवम् । उपविष्टा यथास्थानं, यथाक्रममभी नृपाः ॥ ६६ ॥
सुरासुरनृसाधूनां, सभा द्वादशपूरिताः । चतुर्वक्त्रेण वीरेण, प्रारेभे धर्मदेशना ॥ ६७ ॥

काव्य–आग्नेय्या गणभृद्विमानवनिता साध्व्यस्तथा नैर्ऋते,
ज्योतिर्व्यन्तरभावनेशदयिता वायव्यगास्तत्प्रिया ।
इशान्या च विमानवासि नरनार्य सश्रिता यत्र तत्,
जैनस्थानमिद रनुत्रिपरिपत्सभूपित पातु व. ॥ ६८ ॥

भो भव्या. श्रूयता सम्यक्, कृत्वा तु स्थिरमानसम्, । दुर्लभं दशदृष्टान्तैर्मानुष्य चोत्तम कुलम् ॥ ६९ ॥
दुष्प्राप्यं मानुप कार्यं, तत्किञ्चिदुत्तमैर्जनै । मुहुर्त्तमेकमप्यस्य, नैव याति यथा वृथा ॥ ७० ॥
दिवा यामचतुष्केण, कार्य किमपि तन्नरे । निश्चिन्तहृदयैर्येन, यामिन्या सुप्यते सुपम् ॥ ७१॥
तत्किञ्चिदष्टभिर्मासै , कार्यं कर्म विवेकिना । एकत्र स्थीयते येन, वर्षाकाले यथासुपम् ॥ ७२ ॥
यौवन प्राप्य सर्वार्थ, सारसिध्धिनिवन्धनम् । तत्कुर्यान्मतिमान् येन, वार्धके सुपमश्नुते ॥ ७३ ॥
अर्जनीय कलावद्भिस्तत्किञ्चिज्जन्मनामुना । ध्रुवमासाद्यते येन, शुध्ध जन्मान्तरं पुनः ॥ ७४ ॥
प्रतिसंवत्सर ग्राह्य, प्रायश्चित्त गुरो पुर'। शोध्यमानो भवेदात्मा, येनादर्श इवोज्ज्वल· ॥ ७५ ॥

प्रतिवर्षं सहर्षेण निजवित्तानुमानतः । पूजनीयाः सधर्माणो, धर्माचार्याश्च धीमता ॥ ७६ ॥

यतः—सम्यक्त्वं भज मुञ्च कुत्सितमतं मन्यस्व देवं जिनम्,
सत्साधून् गुरुतां नय त्यज मदं मा जन्तुनिन्दां कृथाः ।
माकार्षीः परतातिमुत्तमगुणैः सङ्गं सुशीलात्मकै-
रात्मारामतया भजस्व न शिवं दूरे तव स्थास्यति ॥ ७७ ॥

मनोवचनकायाश्च, वर्त्तन्ते यस्य निर्मलाः । संसारं स समुत्तीर्य, पारगामी भवत्यलम् ॥ ७८ ॥

यतः—मन एव मनुष्याणां, कारणं बन्धमोक्षयोः । बन्धस्य विषयासङ्गि, मुक्तेर्निर्विषयं मनः ॥ ७९ ॥

दानं पूजा तपश्चैव, तीर्थसेवा श्रुतं तथा । सर्वमेव वृथा तस्य यस्य शुद्धं न मानसम् ॥ ८० ॥

स्वजने स्नेहसंबन्धे, रिपुवर्गेऽपकारिणि । स्यात् तुल्यं ते यदा चित्तं, तदा ते परमं सुखम् ॥ ८१ ॥

शब्दादिविषयग्रामे, सुन्दरेऽसुन्दरेऽपिवा । एकाकारं यदाचित्तं, तदा ते परमं सुखम् ॥ ८२ ॥

गोशीर्षचन्दनालेपे, वासीछेदकयोर्यदा । अभिन्नचित्तवृत्तिः, स्यात्तदाते परमं सुखम् ॥ ८३ ॥

पीयूषमिव सुस्वादु, भास्वानिव विबोधकृत् । ज्ञानीव तत्त्वनिष्णात , सता वचनविस्तर ॥ ८४ ॥
सुनृत करुणाक्रान्तमविरुद्धमनाकुलम् । अग्राह्य गौरवाश्लिष्ट, वच सद्भि प्रशस्यते ॥ ८५ ॥
हित मित प्रिय स्निग्ध, मधुर परिणामि यत् । भोजन वचनञ्चापि, भुक्तमुक्त प्रशस्यते ॥ ८६ ॥
सर्वाशुचिनिधानस्य, कृतघ्नस्य विनाशिन । वर्ण्यते तस्य कायस्य, मूढेन गुणविस्तर ॥ ८७ ॥
शरीर व्रणमित्याहुर्भोज्यन्तत्पिण्डबन्धनम् । व्रणप्रक्षालन स्नान, वस्त्र स्यात्तस्य पट्टक ॥ ८८ ॥
कर्पूरकुङ्कुमागुरुमृगमदहरिचन्दनादिवस्तूनि । भव्यान्यपि ससर्गान्मलिनयन्ति कलेवर नृणाम् ॥८९॥
सुस्वाद सुसुगन्धिमोदकदधिक्षारेक्षुशाल्योदनम् । द्राक्षापर्पटिकामृताघृतपुरस्वर्गाच्युताम्रादिकम् ।
भुक्त यत्सहसैव यन्त्रमलसान्सपद्यते सर्वत । त काय सकलाऽशुचिशुचिमहो ! मोहान्धता मन्यते९०
एव विधस्यकायस्य, सार यत्पुण्यसेवनम् । परोपकारकरण, व्रताभिग्रहधारणम् ॥ ९१ ॥

यत –मनोविशुद्ध पुरुषस्य तीर्थं, वाक्सयमश्चेन्द्रियनिग्रहश्च ।
त्रीण्येव तीर्थानि शरीरभाजा, स्वर्गं च मोक्षञ्च निदर्शयन्ति ॥ ९२ ॥

अन्यच्च—जयन्ति जितमत्सराः परहितार्थमभ्युद्यताः, पराभ्युदयसुस्थिताः परविपत्तिखेदाकुलाः ।
महापुरुषसंकथाश्रवणजातरोमोद्गमाः, समस्तदुरितार्णवप्रकटसेतवः सन्नराः ॥ ९३ ॥
जनस्य सर्वस्य समीहितानि कार्याणि कुर्वन्नुपकारकारी ।
स्वार्थे प्रमादी प्रगुणः परार्थे न कस्य कस्येह स वल्लभोऽभूत् ॥ ९४ ॥
न सद्वाक्यात्परं वश्यं न कलायाः परं धनम् । नाहिंसायाः परो धर्मो न संतोषात्परं सुखम् ॥ ९५ ॥
धर्मस्य विनयो मूलं, विनयेनाऽर्ज्यते धनम् । विनीता स्त्री प्रिया पत्युस्त्रिवर्गो विनयात्मकः ॥ ९६ ॥
विवेकः स्तोकपुण्यानां, चिरं चित्ते न तिष्ठति । मन्दिरेषु दरिद्रस्य, प्रदीपो दीप्यते कियत् ? ॥ ९७ ॥
दानशीलतपोभावःचतुःशाखासमन्वितः; धर्मकल्पद्रुमो दत्ते, श्रेयोवित्तादिकं सुखम् ॥ ९८ ॥
अत्रादौ दानशालायां, माहात्म्यं किञ्चिदुच्यते; दानेनेहोत्तमा भोगाः कीर्त्तिदानेन निर्मला ॥ ९९ ॥
भुक्त्वा राज्यादिकं सौख्यं, पात्रदानाल्लभेच्छिवम् यथा चन्द्रयशा भूपो, धर्मदत्तो वणिग् यथा ॥१००॥
हस्तिपालनृपः प्राह प्रभो ! मे हृदि कौतुकम् । कोऽयं चन्द्रयशाभूपो, धर्मदत्तोपि को नरः ? ॥ १०१ ॥

प्रभु प्रोवाच भो राजन्,' श्रूयता तत्कथानकम् । विस्मयस्तव चित्तस्य, श्रुते यस्मिन्भविष्यति ॥ २ ॥
तथाहि मध्यगो द्वीपो, जम्बूनामा प्रकीर्त्तित । तन्मध्ये प्रथम क्षेत्र, पवित्र भरताभिधम् ॥ ३ ॥
तन्मध्येऽप्युत्तमो देश, सारदादेवताश्रित । काश्मीर कौतुकैर्युक्तो, विरक्त पापकर्मत ॥ ४ ॥
चन्द्रवत्प्रोज्ज्वल यत्र, पुर चन्द्रपुराभिधम् । श्रीयशोधवलो यत्र, धात्रीशो धर्मवान् शुचि ॥ ५ ॥
सुरदेवीसमा देवी, यस्य जज्ञे यशोमती । रूपसौभाग्यशीलादिगुणमाणिक्यभूषिता ॥ ६ ॥
तत्कुक्षिसरसीहसो, निर्मलश्च महामति । शुद्धपक्षोऽभवद्राज्ञो, नाम्ना चन्द्रयशा सुत ॥ ७ ॥
धात्रीभि पाल्यमानस्तु, हस्ताङ्कस्तेषु सचरन् । क्रमेण तनय सोऽथ, सञ्जात सप्तवार्षिक ॥ ८ ॥
आचार्याय ततो राज्ञा, पठनार्थं समर्पित । प्राज्ञ पठति सोऽत्यन्त, पूर्वाधीतमिव श्रुतम् ॥ ९ ॥
व्याकरण च साहित्य, छन्दोऽलङ्करणं तथा । स्वल्पैरेव दिनै सर्वं, शास्त्रं तेनातिशिक्षितम् ॥ ११० ॥
कृत शकुनशास्त्रेषु, दृढ परिचयस्तत । निपुण सर्वशब्देषु, बभूव पशुपक्षिणाम् ॥ ११ ॥
लिखित पठित गीत, नृत्य वादित्रसस्कृते । इत्याद्या शिक्षिता येन, सर्वा द्वासप्तति कला ॥ १२ ॥

सिंहो वकः कुर्कुटश्च, काकश्वानौ खरस्तथा । विंशतिर्ये गुणा एषां, तस्य देहे वसन्ति ते ॥ १३ ॥
उक्तञ्च–प्रभूतकार्यमल्पं वा, यो नरः कर्तुमिच्छति । सर्व्वारम्भेण तत्कार्यं, सिंहादेकं पदं यथा ॥ १४ ॥
इन्द्रियाणि च संयम्य, वकवत्पण्डितो नरः । देशकालोपपन्नानि, सर्वकार्याणि साधयेत् ॥ १५ ॥
प्रागुत्थानञ्च युद्धञ्च, संविभागं च वन्धुषु । स्त्रियमाक्रम्य भुञ्जीत, शिक्षेच्चत्वारि कुर्कुटात् ॥ १६ ॥
गूढमैथुनधारिष्टत्वं, काले चालयसंग्रहम् । अप्रमत्तमविश्वासं, पञ्च शिक्षेत वायसात् ॥ १७ ॥
वह्वाशी चाल्पसन्तुष्टः, सुनिद्रो लघुचेतनः । स्वामिभक्तश्च शूरश्च, षडेते श्वानतो गुणाः ॥ १८ ॥
आरूढश्च वहेद् भारं, शीतोष्णं न च विन्दति । सन्तुष्टश्च चरेन्नित्यं, त्रीणि शिक्षेत रासभात् ॥ १९ ॥
यस्य पुंसो गुणा एते, कथ्यते सुगुणः स हि । द्वात्रिंशदिति कथ्यन्ते, लक्षणानि नरस्य च ॥ १२० ॥
तथाच–कुलीनः[1] पण्डितो[2] वाग्मी[3], गुणग्राही[4] सदोत्तमः[5] । सत्पात्रसंग्रही[6] त्यागी[7], गम्भीरो[8] विनयी[9] नयी[10] ॥ २१ ॥
शृङ्गारी[11] श्लाघया युक्तः[12], सत्यवाक्[13] शुद्धमानसः[14] । गीतज्ञो[15] रसिको[16] वादी[17], गुप्तार्थः[18] दानसुप्रियः[19] ॥२२॥

मन्त्रवादी कलायुक्त , सद्धनी च विचक्षण । धूर्तो मिष्टान्नभोजी च, तेजोवान् धार्म्मिकस्तथा ॥२३॥
कपटी लेखक क्षान्त , परचित्तोपलक्षक । ज्ञातार्थ सर्वग्रन्थेषु लक्षणानि नरोत्तमे ॥ २४ ॥
वाह्यानि लक्षणान्येतान्येतान्यभ्यन्तराण्यपि । सामुद्रिके तथोक्तानि, रेखाभि करपादयो ॥ २५ ॥
प्रासाद पर्वत शुकांकुशसुप्रतिष्ठ–पद्माभिषेकयवदर्पणचामराणि । कुम्भो ऽक्ष मत्स्यमकरद्विपसत्प
तार्का, सद्दामनीवसुमतीरथतोरणानि ॥ २६ ॥
छत्र ध्वज स्वस्तिकयूपवापी, कमण्डलु स्तूप मयूर कूर्म्मा । अष्टापद स्थाल समुद्रसिंहा, द्वात्रिंश
देव नरलक्षणानि ॥ २७ ॥
इत्थ शरीरचिह्नानि, दृश्यन्ते यस्य हि स्फुटम्। स भोगी सत्त्ववान् दाता, भूपतिश्च प्रजायते ॥ २८ ॥
चन्द्रयशा स बालत्वे, देहलक्षणलक्षित । विज्ञानवेशभाषासु, बभूव चतुरो नर ॥ २९ ॥
अष्टादशलिपीनाञ्च, धूर्त्तवादेन्द्रजालयो । सर्वपारासिकानाञ्च, ज्ञाताऽभूत्स महामति ॥ १३० ॥
स क्रमात्प्राप तारुण्य, युवतीजनमोदनम्। युवराजपदे न्यस्त , पित्राऽथ गुणरञ्जनात् ॥ ३१ ॥

विचाराचारसन्तोष–ज्ञानधर्म्मतपःक्षमाः । सौजन्यौदार्यमुख्याश्च, गुणास्तेनार्जिता भृशम् ॥ ३२ ॥
इत्थं तं गुणिनं ज्ञात्वा, प्रजारागमपि स्फुटम् । राज्यदानाय तस्याथ, भूपोऽभूदुत्सुकः पुनः ॥ ३३ ॥
नेत्राम्बुपूरितः पुत्रः, प्रोवाच पितरं प्रति । निश्चिन्तोऽहं सुखी चास्मि, त्वत्पादाम्बुजसेवनात् ॥ ३४ ॥

यतः—

क्व पर्व्वपीयूषकरः? क्व तारकाः? क्व च स्वयम्भूरमणः? क्व गोष्पदम्? । क्व सन्मणिः ? क्वेह च कर्कराश्च ?
क्व शं ? प्रभूपासनजं क्व राज्यम् ? ॥ ३५ ॥

स्मित्वा धात्रीधवः प्राह, शृणु वत्स!सुसात्त्विक; ! । पुरापि श्रूयते ह्येवं, सुखं नास्त्येव सेवया ॥ ३६ ॥
काव्यम्–सोच्छ्वासं मरणं निरग्नि दहनं निःशृङ्खलं बन्धनम्, निष्पङ्कं मलिनं विनैव नरकं तीव्रा महावेदना
सेवासंजनितं नरस्य सुधियो यत्पारवश्यं नृणाम्, पञ्चानां सविशेषमेतदपरं षष्ठं महापातकम् ॥ ३७ ॥
जीवन्तोऽपि मृताः पञ्च, श्रूयन्ते किल भारते । दरिद्री व्याधितो मूर्खः, प्रवासी नित्यसेवकः ॥ ३८ ॥
वृद्धौ च मातापितरौ, साध्वी भार्या शिशुः सुतः । अप्यकार्यशतं कृत्वा, भर्त्तव्यान्मुनिरब्रवीत् ॥ ३९ ॥

मातृपित्रोरभरक, क्रियामुद्दिश्य याचक । मृतस्याशप्रतिग्राही, न भूय पुरुषो भवेत् ॥ १४० ॥*

धृत्वाञ्जलि सुतोऽप्यूचे, ईदृश तात ! मा वद । यस्य भाग्य भवत्युग्र, मातापित्रो· स सेवकः ॥ ४१ ॥

यत –राज्यार्थे निश्चय ज्ञात्वा, भूधरो हर्षपूरित । सुताय प्रददौ कोश, समग्रं शुभलक्षिणे ॥ ४२ ॥

स्वाङ्गरक्षाकृते तस्य, प्रसाद कृतवान्नृप । समग्रविषये चाधिकारी सस्थापित. पुन· ॥ ४३ ॥

पुत्रपित्रोस्तयो प्रीत्या, कालो याति सुखान्वितः। दिनै सपद्यते सर्वं, पुण्यैः किं नाम दुष्करम् ?॥४४॥

वशीभवन्ति विश्वानि, विलीयन्ते विपत्तय । सपदश्च हि सिध्यन्ति, पश्य धर्मानुभावत ॥ ४५ ॥

अन्यदाऽसौ चन्द्रयशा, सुख सुप्तो निशाभरे । सप्तभूमियुते सौधे, रत्नैर्ध्वस्ततमोव्रजे ॥ ४६ ॥

पुष्पप्रकरसङ्कीर्णे,पल्यङ्के कोमलान्विते। शृणोति स्म शिवाशब्द, सुश्रू(श्र)वश्च स कार(सकारु)णम्॥४७॥

॥ युग्मम् ॥

किञ्चिन्निद्रो जजागार, कुमारश्चेत्यचिन्तयत् । अहो एष शिवाशब्दो, मम लाभ हि शसति ॥ ४८ ॥

---

* नवृत्तिकाङ्कित प्रपत्रे

वामस्वरा शिवा श्रेष्ठा, पिङ्गला दक्षिणस्वरा । प्रदक्षिणा च वामा च, कोकिला सिद्धिदायिनी ॥ ४९ ॥
यथाहं वेद्मि शब्दार्थं, कोऽपि वेत्ति तथाऽपरः । स गृह्णाति तदा भव्यं, ममाग्रेऽस्ति धनं बहु ॥ १५० ॥
पुनः शिवां रटन्तीं तां, श्रुत्वा सत्पुरुषाग्रणीः । को न वेत्ति शिवाप्रोक्तमिति निर्णीतवान् हृदि ॥ ५१ ॥
समुत्थाय स पल्यङ्कात्, वीरकच्छा विधाय च । खङ्गधारा(पट्टोडन)धरो भूत्वा, धृत्वा धैर्यं च मानसे॥५२॥
शिवाशब्दानुसारेण, व्रजन्मार्गे पुराऽन्तरे । चतुष्पथमतिक्रम्य, दुर्गं चोल्लङ्घ्य वेगतः ॥ ५३ ॥
क्षणात्प्राप महोद्याने, स्मशानं सर्वभीभृतम् । रौरवं घोरतमसा, वीभत्सं वहिरन्तरा ॥ ५४ ॥
क्वचित्करालकङ्काल–वेतालव्यालसंकुलम् । क्वचिद्रौद्रतराराव–वराहव्याघ्रभीषणम् ॥ ५५ ॥
घूकघूत्कारसंव्याप्तं, संकीर्णं सिंहसंवरैः । तत्र शब्दानुसारेणाग्रेऽग्रे धीरो जगाम च ॥ ५६ ॥

॥ पञ्चभिः कुलकम् ॥

ददर्शाग्रे स उद्योतं, ज्वलन्तं चाग्निकुण्डकम् । झात्कारकान्तिमान्स्वर्ण–पुरुषस्तत्र वीक्षितः ॥ ५७ ॥
देदीप्यमानमत्यन्तं, दृष्ट्वा तं स्वर्णपौरुषम् । आ सिक्त्वा शीतलीचक्रे, समीपस्थितवारिणा ॥ ५८ ॥

ततस्त बहिराकृष्य, खनित्वा भूमिमन्यतः । निक्षिप्य विधिवत्तत्र, वलितोऽसौ सुविस्मय ॥ ५९ ॥
समागत्य स्वसस्थाने, स सुप्त शेषशर्वरीम् । निद्रात्यागे च प्रत्यूषे, प्रात कृत्यानि चाकरोत् ॥ १६० ॥
देवध्यान गुरुध्यान, कृत्वा स्मृत्वा नमस्क्रियाम् । माङ्गल्यतूर्यपूर्वश्च, ययौ राजसभा सुधी ॥ ६१ ॥
प्रणिपत्य पितु पादानुपविष्टो यथासने । पित्रा पृष्टं सुखी वत्स !, सोऽप्याह त्वत्प्रसादत ॥ ६२ ॥
यत –ते पुत्रा ये पितुर्भक्ता , स पिता यस्तु पोपक.। तन्मित्र यत्र विश्वास , सा भार्या यत्र निर्वृति ॥६३॥
सभा सपूर्य राजाऽसौ, विशिष्टै सेवकैर्वृत । सिहासने स्थितस्तुङ्गे, यथा पूर्वाचले रवि' ॥ ६४ ॥
तदा च वरनारीभि–र्वीज्यते चामरद्वयम् । पूत श्वेतातपत्र च, ध्रियते मस्तकोपरि ॥ ६५ ॥
गन्धर्वैश्च गुणग्रामोऽभिरामो गीयते कलम् । जयनन्देतिनिर्घोषै , पठ्यते वन्दिभिर्भृशम् ॥ ६६ ॥
पुरो नृत्यन्ति पात्राणि, राजाऽसौ पूर्वपुण्यत । मन्त्रिसामन्तमध्यस्थ , सुरेन्द्र इव शोभते ॥ ६७ ॥
काव्यम्–राज्यं प्राज्य मदजलकणान् स्पन्दमाना गजाली, तुङ्गा भोगा पवनजविनो वाजिन स्यन्दनाश्च। दर्पाध्माता' सुभटनिकरा कोशलक्ष्मी समग्रा, सर्व चैतद्भवति नियत देहिना धर्मयोगात् ॥६८॥

अथाऽस्मिन्समये तत्र, वेत्रिणेति निवेदितम्। स्वामिन्! कोऽपि पुमान् राज-द्वारे पूत्कुरुते भृशम्॥६९॥
मस्तके क्षिप्तधूलिश्च, प्रतोलीस्तम्भमाश्रितः। दीनाननो हीनवस्त्रस्तेजोभाग्यविवर्जितः॥ १७० ॥
मुषितो मुषितोऽस्मीति, स च वक्ति मुहुर्मुहुः। देव! तस्य वराकस्य, ददाम्यथ किमुत्तरम्? ॥ ७१ ॥

॥ युग्मम् ॥

प्रतीहारवचः श्रुत्वा, कृत्वा तु स्थिरमानसम्। इति स्मृतिवचःसारं, सस्मार पृथिवीपतिः ॥ ७२ ॥
यतः—दुर्बलानामनाथानां, बालवृद्धतपस्विनाम्। अन्यायपरिभूतानां, सर्वेषां पार्थिवो गतिः ॥ ७३ ॥
विचिन्त्यैवं नृपः प्रोचे, स मध्ये मुच्यतां पुमान्। आगतो वेत्रिमुक्तोऽसौ, पूत्कुर्वन् नृपसंसदि ॥ ७४ ॥
शुभवाक्यैः कृतः स्वस्थः, आश्वास्य चोपवेशितः। राज्ञोचे वद भो भद्र!, किं ते दुःखस्य कारणम्? ॥७५॥
केन त्वं मुषितश्चात्र, पराभूतोऽसि केन वा। किं त्वदीयं हृतं केन, ? कथय त्वमशङ्कितः॥ ७६ ॥
तेनोक्तं शृणु राजन्मे, सुवर्णपुरुषो गतः। किं कुर्वेऽहं क्व गच्छामि?, कस्याग्रे पूत्करोम्यहम्? ॥ ७७ ॥
यतः—पञ्चमो लोकपालस्त्वं, कृपालुः पृथवीपतिः। देवेनाहं पराभूत, आगतः शरणं तव ॥ ७८ ॥

कुवस्त्र मलिन दीनं, दुर्बलाङ्गश्च त नरम्। दृष्ट्वा प्रोवाच भूपाल, किमयुक्तं ब्रवीष्यद ? ॥ ७९ ॥
दरिद्रसदृश रूप, दुरवस्था तवेदृशी। स्ववपुश्चेष्टया भद्र, ? विमृश्येव तदुच्यते ॥ १८० ॥
यत -कुचेलिन दन्तमलावधारिण, वह्वाशन निष्ठुरवाक्यभाषिणम् । सूर्योदये चास्तमने च शायिन,
विमुञ्चति श्रीर्यदि चक्रपाणिनम् ॥ ८१ ॥
सुजीर्णमन्न सुविचक्षण सुत, सुराधिता श्रीर्नृपति सुसेवित । सुचिन्त्य चोक्त सुविचार्य यत्कृत,
तद्दीर्घकालेऽपि न याति विक्रियाम् ॥ ८२ ॥
भवादृशा गृहे स्वर्णपुरुषो यदि विद्यते। तदाश्चर्यमिद लोके, दृश्यते विपुल किल ॥ ८३ ॥
स नर प्राह दे स्वामिन्! शोभन शृणु मे वच । ये श्रियाऽलङ्कृता सन्ति, शोभन्ते ते दिवानिशम्॥८४॥
श्रीरहिता नरा ये च, दरिद्रालङ्कृताश्च ये। तेषामेव दशा देहे, दुर्वाच्या भवतीदृशी ॥ ८५ ॥
उक्तञ्च-दरिद्राधिगमे जीव-देहस्था पञ्च देवता । सद्यो निर्गत्य गच्छन्ति, श्रीह्रीधीकान्तिकीर्त्तयः॥८६॥
अन्यच्च-शील शान्तयति श्रुत शमयति प्रज्ञा निहन्त्यादरात्, दैन्य दीपयति क्षमा क्षपयति व्रीडामपि

व्यस्यति । तेजो जर्जरयत्यपास्यति धृतिं विस्तारयत्यर्थिताम्; पुंसः क्षीणधनस्य किं न कुरुते ? वैरी कुटुम्बगृहे ॥ ८७ ॥

यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुतवान्गुणज्ञः । स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ८८ ॥

स्वामिन्मेऽपहृतं द्रव्यं, तेनाहं धनवर्जितः । अवस्थामीदृशीं प्राप्तः, पूर्वदुष्कृतकर्मतः ॥ ८९ ॥

अकारणं सत्त्वमकारणं तपो, जगत्त्रयव्यापि यशोऽप्यकारणम् । अकारणं रूपमकारणं गुणाः, पुराणमेकं नृप कर्मकारणम् ॥ १९० ॥

प्रभुः प्रसादमाधाय, चित्ते कृत्वा कृपां यदि । वालयिष्यसि मे द्रव्यं, दारिद्र्यं तर्हि यास्यति ॥ १९१ ॥

पुनः पृथ्वीपतिः प्राह, सत्यं कथय किङ्गतम् ? । किञ्चिदन्यद्गतं मन्ये, कथं ते हेमजो नरः ? ॥ ९२ ॥

प्राहुः सभ्यास्तदा देव! यदसौ वक्ति तत्तथा । ऊष्ट्रस्य कण्टका भक्षं, युक्तं द्राक्षा तु नोचिता ॥ ९३ ॥

यतः—करहा कण्टउ चारकीय, एवही भलीय परक्ख । कमलवणइ हंसा वसई, ठाम दिउं जोइ मुक्ख९४

पुन प्रोवाच भूपाल', कृपालुस्त नरं प्रति । कथमुत्पादित स्वर्णनरो ब्रूहि नरोत्तम ? ॥ ९५ ॥
तेनोक्त शृणु राजेन्द्र!, सुवर्णपुरुषस्य ते । उत्पत्ति मत्कथापूर्वं, कथयामि यथातथम् ॥ ९६ ॥
अस्मिन्नेव पुरे स्वामिन्!, श्रेष्ठी श्रीपतिरित्यभूत् । षण्णवतिर्गृहे यस्य, वसुवुर्धनकोटय ॥ ९७ ॥
सद्भार्या श्रीमती तस्य, शीलसौभाग्यभूषणा । दक्षा सर्वेषु कार्येषु, वभूव गुणशालिनी ॥ ९८ ॥
काव्यम्—दासी कर्मणि नर्मणि प्रियसखी मन्त्री च मन्त्रकमे, शृङ्गाराऽमृतकूपिका मधुरवाक् दु खेसुखे तन्मयी । लज्जालु कुलवृद्धिकल्पलतिका सर्वस्य विश्वासभू', पत्नी प्रेमपवित्रिता यदि पर पुण्यै - समासाद्यते, ॥ ९९ ॥
तया सार्धं महासौख्य, विलसत्यधिकाधिकम् । करोति धर्मकार्यञ्च, काल यान्त न वेत्ति स ॥ २०० ॥
सान्यदा सुखगोष्ठयर्थं, गताऽभूत्स्वसखीगृहे । लालयन्ती स्वाडिम्भानि, तया दृष्टा तदा सखी ॥ १ ॥
एक स्कन्धेऽपर कट्यामेकं द्वे च गृहाङ्गणे । तद्बालकानि वीक्ष्येति, सा दध्यौ श्रीमती हृदि ॥ २ ॥
एषा पुत्रवती धन्या, हा हा धिग्मम जीवितम् । वन्ध्यादोषान्मया यस्मात्, कुल पैत्र्य कलङ्कितम् ॥ ३ ॥

यतः—गन्धहीनं यथा पुष्पं, तटाकमिव निर्जलम् । कलेवरमिवाजीवं, धिग्नारीजन्म निःसुतम् ॥ ४ ॥
स्फारभूषणभाराऽपि, न भाति स्त्री सुतं विना । उदारतरताराऽपि, निशेव शशिवर्जिता ॥ ५ ॥
पतिवंशप्रवाहस्य, कृतश्छेदोऽधुना पुनः । किं करोमि?, क्व गच्छामि? दर्शयामि कथं मुखम् ? ॥ ६ ॥
सातिदुःखातुरा जाता, वलिता च गृहे गता । सुतार्त्तिपीडितात्यन्तं, सुप्ता चावासकूणके ॥ ७ ॥
भोजनावसरे श्रेष्ठी, स्वसद्मनि समागतः । नैव दृष्टा यदा पत्नी, तदा चेतस्यचिन्तयत् ॥ ८ ॥
कथं न दृश्यते भार्या?, या ममागमनक्षणे । प्रतिपत्तिं सदा चक्रे, रे रे क्वाद्य गताऽस्ति सा ? ॥ ९ ॥
मध्ये दृष्ट्वा तथाऽवस्थां, पृष्टं केनासि दूनिता;? । सुप्ता शोकगृहे कस्मात्?, वद दुःखस्य कारणम् ॥२१०॥
शय्यातः सोत्थिता साध्वी, दुःखाश्रुक्लिन्नलोचना । म्लानानना महाशोकात्, हिमदग्धेव पद्मिनी ॥ ११ ॥
ईदृशीं वीक्ष्य स श्रेष्ठी, पप्रच्छ प्रेयसीं पुनः । कथमुद्वेजिताऽद्य त्वं, दृश्यसे कमलानने ? ॥ १२ ॥
गद्गदाक्षरशब्देन, पत्नी प्रोवाच वल्लभम् । भवत्प्रसादतो नाथ!, मां दूनयति कोऽपि न ॥ १३ ॥
परं दुःखकरं कर्म, यत्केनापि न लुप्यते । अधुना भोजनं तावत्, कुरुत्सूरं च मा कुरु ॥ १४ ॥

भोजनानन्तर सर्व्वं, कथयिष्यामि कारणम् । अग्रेदक्षा इद प्राहु, प्रथम भोजनं फलम् ॥ १५ ॥
एव सतोप्य सद्वाण्या, श्रेष्ठिन हेतुयुक्तया । कारयामास सा दक्षा, स्नानाद्या भोजनक्रियाम् ॥ १६ ॥
भोजनान्ते क्षण सुप्त, प्रबुद्ध स्वयमेव स' । तत पप्रच्छ सत्प्रीत्या, भार्या दु खस्य कारणम् ॥ १७ ॥
जजल्प चित्तसङ्कल्प, प्रिय प्रति प्रिया तत' । स्वामिन्मे बाधते चित्तमनपत्यत्वमेव च ॥ १८ ॥
वन्ध्याकदर्थना यत्र, अपर सुगतिर्नहि । श्रूयते भारते श्लोकस्तदर्थमवधारय ॥ १९ ॥
यत -अपुत्रस्य गतिर्नास्ति, स्वर्गो नैवच नैवच । तस्मात्पुत्रमुख दृष्ट्वा, पश्चात्धर्म्म समाचरेत् ॥२०॥
सख्या गृहे सुतान्वीक्ष्यापत्यचिन्ता ममाप्यभूत् । तच्छ्रुत्वाऽचिन्तयच्छ्रेष्ठी, पुत्रचिन्ताप्रवर्त्तित ॥२१॥
गन्धेनेव प्रसूनानि, विवेकेन गुणा इव । तनयेन विना पुसा, न विभाति विभूतय ॥ २२ ॥
शैत्यमुत्पादयन्नङ्गे, सुधारस इवोच्चकै. । रमते तनुजन्माङ्के, धन्यानामेव योषिताम् ॥ २३ ॥
उत्पतन्निपतन् रिंपन्, हसन् लालावलीर्वमन् । कस्याश्चिदेव धन्याया, क्रोडमायाति नन्दन ॥ २४ ॥
विना स्तम्भ यथा गेह, यथा देहं विनात्मना । तरुर्यथा विना मूलं, तथा पुत्र विना कुलम् ॥ २५ ॥

किं करोमि ? क्व गच्छामि ?, निर्भाग्योऽहं हहा मम । सर्वेषामेव सौख्यानां, स्थाने नैकोऽप्यभूत्सुतः ॥
किं कुर्वे बान्धवैश्वर्यैः, किं कुर्वे हट्टसद्मभिः । सर्वः परिग्रहोऽप्येवमेकं पुत्रं विना वृथा ॥ २७ ॥
यतः–पियमहिलामुहकमलं, बालमुहं धूलिधूसरच्छायम् ।
सामिमुहं सुपसन्नं, तिन्निवि पुन्नेहिँ पावन्ति ॥ २८ ॥
इत्यादि चिन्तयित्वासौ, प्रोवाचैवं प्रियां प्रति । खेदं मा कुरु पुत्रार्थे, मयोपायः करिष्यते ॥ २९ ॥
ततश्च श्रेष्ठिनारब्धं, मन्त्रयन्त्रादिपूर्वकम् । देवताराधनं देव्याः, पूजनं होमशान्तिकम् ॥ २३० ॥
मिथ्यात्वेऽभून्मनस्तस्य, कृतं पाखण्डिनां व्रतम् । सम्यक्त्वं मलिनश्चक्रे, जिनधर्म्माविरोधतः ॥ ३१ ॥
अथ तत्र पुरे धर्मधनो नाम्ना पवित्रधीः । मित्रं तस्यास्ति सोऽन्येद्युरुवाच श्रेष्ठिनं प्रति ॥ ३२ ॥
भो मित्र ! श्रीपतिश्रेष्ठ ! मिथ्यात्वं मूढ मा कुरु । मिथ्यात्वतो भवेत्सिद्धिस्तदा कोऽप्यसुखी नहि ॥३३॥
मित्र ! मिथ्यात्वशब्दार्थं, विचारय निजे हृदि । यत्किञ्चित्क्रियते मिथ्या, मिथ्यात्वं हि तदुच्यते ॥३४॥
उक्तञ्च–विषादिरुग्वह्निरिपुव्रजेभ्यो, मिथ्यात्वमत्यन्तदुरन्तदोषम् ।

एकत्र जन्मन्याहित विषाद्य, मिथ्यात्वमाहन्ति नृणामनन्तम् ॥ ३५ ॥

मिथ्यात्व परमो वैरी, मिथ्यात्व परमं तम. । मिथ्यात्वं भवकूपान्ते, पातयत्यनिश खलु ॥ ३६ ॥

अन्यच्च–शीलानि दानानि तपासि पूजा, सत्तीर्थयात्रा प्रवरा दया च ।

सुश्रावकत्व व्रतपालनञ्च, सम्यक्त्वपूर्वाणि महाफलानि ॥ ३७ ॥

पाप यदर्ज्जितमनन्तभवैर्दुरन्ते , सम्यक्त्वमेकमखिल सहसा भिनत्ति ।

भस्मीकरोति सहसा तृणकाष्ठराशी, कि नोर्जितोज्ज्वलशिखो ज्वलन' प्रसिद्धः ॥ ३८ ॥

अतस्त्रिधा सद्गुरुदेवधर्म्म–भेदात्सुसम्यक्त्वमिद प्रपाल्यम् ।

श्रीसप्रतिश्रेणिकवज्रकर्णश्रीरामकृष्णादिकवत् सुभावात् ॥ ३९ ॥

सम्मत्त उच्छिन्दिय, मिच्छत्तारोवण कुणइ नियकुलस्स ।

तेण सयलो वि वसो, दुग्गइमुहसमुहो नीओ ॥ ४० ॥

यत —दसणभट्ठो भट्ठो, दसणभट्ठस्स नत्थि निव्वाणं ।

सिज्झन्ति चरणरहिया, दंसणरहिया न सिज्झंति ॥ ४१ ॥

दंसणभट्ठा भट्ठा, नहु भट्ठो होइ चरणपब्भट्ठो । दंसणमणुपत्तस्सवि, परिअडणं नत्थि संसारे ॥ ४२ ॥

मिच्छत्तं उच्छिन्दिय, सम्मत्तारोवणं कुणइ नियकुलस्स । तेण सयलोवि वंसो, सिद्धिपुरीसंमुहो नीओ॥

अतः कृतेपि मिथ्यात्वे, कदाचिन्नन्दनो भवेत् । तथापि न वरो ज्ञेयः, सोपि ब्राह्मणपुत्रवत् ॥ ४४ ॥

शृणु श्रेष्ठिन्पुरा कोपि, देवशर्म्मेति वाडवः । पुत्रार्थं पाद्रवे व्यग्रो, जगादेति सुभक्तितः ॥ ४५ ॥

यदि मे त्वत्प्रसादेन, पुत्रो भवति निश्चितम् । तदा देवकुलं रम्यं, कारयामि नवं तव ॥ ४६ ॥

प्रतिवर्षं पुनस्छागमेकैकं पुरतस्तव । हनिष्यामि ततो देवि ! वाञ्छां पूरय पूरय ॥ ४७ ॥

अथ तस्याऽभवत् पुत्रः, कर्म्मणा कालयोगतः । देवीदत्तेति नाम्नासौ, निर्म्ममे देवशर्म्मणा ॥ ४८ ॥

देवताभवनं तेन, नवीनं कारितं ततः । परितो वाटिका चक्रे, खानितं च सरोवरम् ॥ ४९ ॥

हतश्छागोऽथ देवाग्रे, महोत्सवपुरस्सरम् । अजमेकं च मिथ्यात्वी, प्रतिवर्षं जघान सः ॥ २५० ॥

क्रमेण देवदत्तोऽसौ, संप्राप्तवरयौवनः । परिणीतोऽथ तत्तोको, महार्त्तध्यानतो मृतः ॥ ५१ ॥

यत.–राज्योपभोगशयनासनवाहनेषु, स्त्रीगन्धमाल्यमणिरत्नविभूषणेषु ।
इच्छाभिलाषमतिमात्रमुपैति मोहाद्ध्यान तदार्त्तमिति तत्प्रवदन्ति सन्तः ॥ ५२ ॥

अजो जात पुरे तत्र, स्थूलरोमा रुपान्वितः । पुष्टदेहो बलिष्ठश्च, कराल कपिलच्छवि ॥ ५३ ॥
वर्षान्ते देवदत्तेन, स क्रीतो द्रव्यदानत । सस्मार पूर्वजातिञ्च, च्छागो दृष्ट्वा निज गृहम् ॥ ५४ ॥
स्वरुपं सकल ज्ञात्वा, च्छागो भीतो व्यचिन्तयत् । देव्यग्रेऽह वधार्थं हा, समानीतोऽत्र वेश्मनि ॥ ५५ ॥
यात्रादिने स्वपुत्रेण, महोत्सवशतैर्युत । चाल्यमानो न चलति, तदा लोकै स ताडित ॥ ५६ ॥
बलेन नीयमानेऽस्मिन्, ज्ञानी मार्गेऽमिलन्मुनि । छागस्य कथित तेन, पूर्वकृत्य स्मराधुना ॥ ५७ ॥
यतः–सयमेव रुक्ख रोविया, अप्पणिया वोयड्डि कारिया । ओवायलुब्धपयते, कि छगला बिब्बित्ति वाससे? 
साधुवाक्यमिति श्रुत्वा, धृत्वा सत्त्व निजे हृदि । चचाल वेगतो मेपः, सर्वलोकैर्निरीक्षित· ॥ ५९ ॥
तदाश्चर्य जना दृष्ट्वा, चिन्तयन्ति स्वमानसे । कुट्टितोऽप्येप नाचालीन्मुनिना चालित कथम् ?॥२६०॥
देवीदत्तोऽब्रवीत्साधो !, कृपा कृत्वा ममोपरि । छागचालनमन्त्रोऽय, दीयता मह्यमुत्तम ॥ ६१ ॥

मुनिनोक्तश्च रे मूर्ख, त्वत्पिताऽयं न वेत्सि किम्? । कृत्वा मिथ्यात्वमार्त्तेन, मृत्वाऽसौ च्छगलोऽभवत्॥६२॥
अट्टेण य तिरियगई, रुद्दज्झाणेण पावए नरयं । धम्मेण देवलोओ, सिद्धिगई सुक्कझाणेणं ॥ ६३ ॥
तवास्ति यदि सन्देहस्तदामुं नय मन्दिरे । मुत्कलं मुञ्चयित्वा तु, पतित्वा पादयोस्ततः ॥ ६४ ॥
कथितव्यं त्वया तात !, संप्राप्तं मरणं यदा । तदा मया न किं पृष्टं, दुःखपीडितचेतसा? ॥ ६५ ॥
युग्मम् ॥

देवीदत्ताभिधस्सूनुस्तवाहं कथ्यतां ततः । निधेयमस्ति यत्किञ्चित्प्रसद्य मम दीयताम् ॥ ६६ ॥
एवं कृतेऽथ मेषेण, सौधकूणे निजाङ्घ्रिणा । दर्शितं निधिसंस्थानं, स प्राप खनिते धनम् ॥ ६७ ॥
काव्यम्—पापान्निवारयति योजयते हिताय, गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतश्च न जहाति ददाति काले, सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ६८ ॥
न मातरि न सौदर्ये, न दारेषु न बन्धुषु । विश्रम्भस्तादृशः पुंसां, यादृग् मित्रे निरन्तरम् ॥ ६९ ॥
पुनर्धर्म्मधनः प्राह, श्रीपतिं प्रति सत्यवाक् । देवोऽपि भाविनीरेखां, को नु मार्जयितुं क्षमः ? ॥२७०॥

भवितव्यनियोगेन, भाव्यं भवति नान्यथा। नालिकेरफलाम्भोवद्, गजभुक्तकपित्थवत् ॥ ७१ ॥
कर्मायत्त फल पुंसा, बुद्धि कर्मानुसारिणी। तथापि सुधिय· कार्य, सुविचार्यैव कुर्वते ॥ ७२ ॥
विधिना विहिते मार्गे, यद्भवेद्दैवनिर्म्मितम्। न शक्यमन्यथाकर्तुं, सशक्रैस्त्रिदशैरपि ॥ ७३ ॥
कथयामि पुनस्तेऽह, भवितव्योपरि स्फुटम्। सोत्कर्णं श्रूयता चैतत्, कथाचूडकथानकम् ॥ ७४ ॥
तथाहि–जम्बूद्वीपेऽत्र भरते, नाम्नास्ति मिथिलापुरी। रणसारो रसानाथस्तत्राभूदिन्द्रसन्निभ· ॥७५॥
सती शीलवती तस्य, प्रिया प्रेमगुणान्विता। कान्तानुगामिनी नित्य, सुरूपाऽऽनन्ददायिनी ॥ ७६ ॥
यत –पत्यौ रता सुशीला च, रतक्षणविचक्षणा। प्रियवदाऽतिरूपा च, पुण्यै सप्राप्यते प्रिया ॥७७॥
तयोर्दिवानिश प्रीत्या, दम्पत्यो रममाणयोः। अन्येद्यु शुभयोगेन, जात· पुत्रो महाधृति ॥ ७८ ॥
पित्रा चक्रे कथाचूडो, नाम तस्य महोत्सवात्। क्रमात्तेनाऽखिल शास्त्र, कलाभि सह शिक्षितम् ॥ ७९॥
क्रमात्स यौवन प्राप, युवतीजनमोहनम्। स्वेच्छया रमते नित्यं, कथाचूडकुमारक· ॥ २८० ॥
इतश्च मगधे देशे, कुशाग्रपुरपत्तने। समकेशरी राजाऽभूच्छत्रुकुञ्जरकेशरी ॥ ८१ ॥

तस्य पुत्री सुनन्दाऽभूत्संप्राप्तवरयौवना । स्त्रीरत्नमतिनिष्पन्ना, विद्याविज्ञानभारती ॥ ८२ ॥
कथाचूडवरस्यार्थे, राजा प्रैषि पुरोहितः । तेनापि मिथिलां गत्वा, विज्ञप्तो रणसारराट् ॥ ८३ ॥
स्वामिन्मगधनाथस्य, सुनन्दास्ति सुता वरा । तव पुत्रस्य दानाय, भूपेन प्रेषितोऽस्म्यहम् ॥ ८४ ॥
ततः पुरोधसा सार्धं, प्रेषितः सैन्यसंयुतः । मार्गे लक्ष्मीपुरे गत्वा, पटकुट्यां स संस्थित; ॥ ८५ ॥
पुरेऽत्र कुरुते राज्यं, सुरकेतुनराधिपः । वेत्रिणा कथितं तस्य, कुमारागमनं तदा ॥ ८६ ॥
सुरकेतुगृहेप्यग्रेऽस्त्येको नैमित्तिको महान् । स राज्ञा कौतुकात् पृष्टो, विवाहोऽसौ भवेन्नवा ॥ ८७ ॥
स जगाद विवाहो हि, भविष्यत्यऽनयोर्द्वयोः । त्रिदशैश्चाल्यमानेऽपि, तद्दिनं न वलिष्यति ॥ ८८ ॥
राज्ञोक्तं शृणु भो विज्ञ ! यदाहं चालयामि तत् ॥ किं तदा भवतः कुर्वे, कथय प्रकटाक्षरम् ? ॥ ८९ ॥
विप्रो जगाद यदि चेत्, कदा केनापि चाल्यते । तदा मे रसनाच्छेदः, कार्यः किं कथ्यते घनम् ?॥२९०॥
इति विप्रपणं श्रुत्वा, भूपोऽप्येवमचिन्तयत् । केन कूटप्रपञ्चेनास्य ज्ञानं क्रियते वृथा ॥ ९१ ॥
पूर्वप्रसाधितो राज्ञा, चेटकः संस्मृतस्तदा । प्रत्यक्षीभूय सोऽवादीत्, कार्यं मे कथ्यतां प्रभो ! ॥ ९२ ॥

राज्ञोक्त देव! सर्पस्त्व, भूत्वा दश कुमारकम्। कूटो भवेद्यथा विप्र , सत्य च स्यान्मयोदितम् ॥ ९३ ॥
कालरात्रिसम रूप, कृत्वा सर्प्पविकारणम्। कथाचुडान्तिके गत्वा, पादे दष्ट सुरेण स· ॥ ९४ ॥
विषेण घारितो यावत्, जातश्चेतनवर्जित । अर्धरात्रे महाहाहाकारश्चोच्छलितस्तदा ॥ ९५ ॥
सैन्या आकुलिता सर्वे, भ्रान्तचित्ता दिशोदिशम्। अभ्रमन् भयभीताश्च, केपि गारुडिक व्यधु ॥ ९६ ॥
मणिमन्त्रोपधगदैर्गुण· कोऽपि वभूव न । चेटकोऽसौ नृपादेशात्पुरुप चाकरोत्पुन ॥ ९७ ॥
सदौषधिभृत स्कन्धे, घटीं न्यस्य सचेतन । आह गारुडिकोऽत्राह, परदेशात्समागत ॥ ९८ ॥
दृष्ट्वा चेष्टा कुमारस्य, फणीन्द्रविषवारिणीम्। प्रतिक्रिया चकारासौ, गुणो नैवाभवत्परम् ॥ ९९ ॥
निर्विषीकरणोपाया, एव दम्भात्कृता घना· । जात· कोपि विशेषो न, तदा देवोऽवदत्पुनः ॥ ३०० ॥
अहो कालगृहीतोऽयमावेष्ट्य निम्बपल्लवे । अब्धौ प्रवाहितव्योऽथ, कि शवेन विधीयते ? ॥ १ ॥
हाहाकार ततो मुक्त्वा, क्षिप्त्वा त च महोदधौ। सशोका सैन्यकास्तस्थुस्तत्र राजसुत विना ॥ २ ॥
पुरोहितोऽपि दीनास्यो, महादु खादचिन्तयत्। अन्यथा चिन्तितं कार्यं, कृत दैवेन चान्यथा ॥ ३ ॥

गतं लग्नदिनं तावत्, हर्षितो नृपतिस्ततः । विवाहकारणं राजा, पुनः पृष्टो निमित्तवित् ॥ ४ ॥
विप्रोऽप्याह महाराज, विवाहो जात एतयोः । यदि चित्ते प्रतीतिर्न, तदा तं पृच्छ चेटकम् ॥ ५ ॥
स्मृतोऽयं चेटको राज्ञा, समागाद्रचिताञ्जलिः । पुनः पृष्टं नरेन्द्रेण, किङ्कार्यं विहितं त्वया ? ॥ ६ ॥
चेटकः प्राह भो भूप, त्वदादेशः कृतो मया । सर्प्परूपेण दष्टोऽसौ, कुमारो वाहितोऽम्बुधौ ॥ ७ ॥
श्रुत्वैवं नृपतिः प्राह, नरं नैमित्तिकं प्रति । अरे अलीकं मा जल्पः, कूटभापी सदासि किम् ? ॥ ८ ॥
लोकोक्तिरीदृशी सत्या, कृतैवं वदता त्वया । प्रत्यक्षं पतिता कूपे, वधूः पितृगृहेऽस्ति यत् ॥ ९ ॥
विप्रो जगाद दूरेऽस्ति, किमङ्गस्य करच्छटा । स्वामिन्! यद्यस्ति ते शक्तिस्तस्य रूपं विलोकय ॥३१०॥
चेटकाय ददौ वाक्यमरे! तं द्रुतमानय । भूपादेशं च संप्राप्य, चेटको वेगतो गतः ॥ ११ ॥
तत्क्षणादेव शक्त्या स, आनीतस्सप्रियस्ततः । कुमारो भूभुजा पृष्टः, परिणीतो वधूयुतः ॥ १२ ॥
विस्मितो मानसे भूपस्तं पप्रच्छ नृपाङ्गजम् । युवयोः पाणिग्रहणं, सञ्जातं केन हेतुना ? ॥ १३ ॥
कुमारः स्माह हे राजन्!, शृणु त्वमावयोः कथाम् । यदाहमहिना दष्टः, प्रक्षिप्तश्च महोदधौ ॥ १४ ॥

तदा कन्याप्यसौ साध्वी, सोत्साहा शुभलोचना । गवाक्षस्था च केनाप्यपहृता पापकर्मणा ॥ १५ ॥
मुक्ता द्वीपान्तरे कुत्र, स्थिता सा तत्र दुःखिता । इतश्चाह निम्बपत्रैर्वेष्टितो जीवितोऽपि सन् ॥ १६ ॥
अम्भोधिलोलकल्लोले, प्रेर्यमाणः सुकर्मतः । तं द्वीपं प्राप चाकृष्य, तया सज्जीकृतो द्रुतम् ॥ १७ ॥
विवाहोऽप्यावयोर्लग्ने, कृतो विद्याधरैस्तदा । अत्रानीतोऽपि केनापि, मुक्तश्चाहं तवान्तिके ॥ १८ ॥
साश्चर्योऽथ नृपो दध्यौ, अहो विलसितं विधेः । यन्नो मिलेन्मिलत्येव, तत्क्षणादपि दैवतः ॥ १९ ॥
उक्तश्च—न सदलैर्न बलैर्न तु मन्त्रणैर्न च धनैः स्वजनैर्न तु बन्धुभिः ।
सुरवरैर्न नरैरपि वार्यते, विधिरहो बलवानिति मे मतिः ॥ ३२० ॥
विद्वान्मूर्खो भटो भीरुः, श्वपाकः पाकशासनः । राजा रङ्कस्तथान्येऽपि, शासने को न दुर्विधेः ? ॥ २१ ॥
ततो राजा निमित्तज्ञं, सन्तोष्य बहुदानतः । क्षामयित्वापराधं स्वं, कुमारश्चातिहर्षितः ॥ २२ ॥
सौभाग्यमञ्जरीपुत्रीमुद्वाह्य स कुमारराट् । राज्ञा स्वसैन्ययुक्तोऽथ, प्रेषितो मिथिलापुरीम् ॥ २३ ॥
हर्षेण रणसारेण, प्रवेशो विस्तरात्कृतः । कुशाग्रपत्तने विप्रः, प्रेषितः क्षेमहेतवे ॥ २४ ॥

राज्ञा पुरोहितः पश्चात्प्रेषितो मिथलापुरे । सुतायुक्तस्य जामातुरामन्त्रणकृते पुनः ॥ २५ ॥
कथाचूडः ससैन्योऽथ, गतस्तत्र प्रियायुतः । समकेसरिणा तस्य, विवाहो विस्तरात्कृतः ॥ २६ ॥
गजाश्वहेमरत्नौघदेशदानेन भूभुजा । करमोचनवेलायां, जामाता बहु मानितः ॥ २७ ॥
मुत्कलाप्याखिलं लोकमनुज्ञाप्य नरेश्वरम्। स चचाल प्रियायुक्तः, स्वपुरं प्रति सत्वरम् ॥ २८ ॥
शिक्षा दत्तेति भूपेन, स्वसुताया विवेकतः। हे वत्स ! त्वं सुखे दुःखे, भूयाः पत्यनुगामिनी ॥ २९ ॥
प्रहृष्टवदना नित्यं, स्थानमानविचक्षणा । भर्तुः प्रीतिकरा या तु, सा भार्या त्वितरा जरा ॥ ३३० ॥
एवमुक्तक्रमां शिक्षां, दत्वाऽथ वलितो नृपः । वलितौ च दंपती तौ तु, प्रापतुर्मिथलापुरीम् ॥ ३१ ॥
देववत्स सदा भोगानन्वभूत् प्रियया सह । अतो भाव्यं भवत्येव, कथाचूडविवाहवत् ॥ ३२ ॥
धर्म्मं श्रुत्वा गुरोः पार्श्वे, गृहीतं श्रावकव्रतम् । तच्छुद्धं दम्भमुक्तेन, तेन भावेन पालितम् ॥ ३३ ॥
ततो द्वादशभेदेन, तपस्तेपे स दुष्करम् । सम्यक्त्वं निरतीचारं,पालितं पापनाशनम् ॥ ३४ ॥
कुर्वतोऽस्य क्रियामुग्रां, गृहस्थस्यापि केवलम् । उत्पन्नं चागतः शक्रः, केवलोत्सवहेतवे ॥ ३५ ॥

तदा शासनदेव्यापि, यतिवेष समर्पित । सहस्रपत्रपद्मञ्च, सौवर्ण रचित सुरै ॥ ३६ ॥

सद्देशना देवसभासमक्ष, तदा कृता केवलिना सुधाभा ।

एव कथाचूडमुनिश्विर स, व्रत प्रपाल्याथ जगाम मोक्षम् ॥ ३७ ॥

अत श्रीपतिमित्र ! त्व, मिथ्यात्व खलु वर्जय । पुण्यमर्जय तत् किन्तु, यथा स्यात्सुभगोत्तम ॥३८॥

यात्यघोऽधो व्रजत्यूर्ध्वं, नर स्वैरेव कर्म्मभि• । खनितेव हि कूपस्य, प्रासादस्येव कारक• ॥ ३९ ॥

ससारे भ्रमण नून, भवेन्मिथ्यात्वभावत । दुष्कर्मोपार्जनेनाधोगति त्वञ्च गमिष्यसि ॥ ३४० ॥

घनञ्च कथ्यते तेन, येन सङ्गतिरावयो । सत्सगत्या सुधर्मत्व, कुसङ्गात्पापमाचरेत् ॥ ४१ ॥

उक्तञ्च–सगवसेण जायइ, धम्म पावं च णत्थि सन्देहो । कुरुरायनेहवद्धो, गोहरण कुणइ गगेओ ४२

सता प्रभावातिशयान्मज्जकोऽपि हि तारक । जलविन्यस्तशैलेन्द्रै , सैन्य रामस्य तारितम् ॥ ४३ ॥

गुणज्ञत्वकृतज्ञत्वममात्सर्यमदीनता । दया सत्य गुरोर्भक्तिरिति सत्पुरुपव्रतम् ॥ ४४ ॥

इत्थं धर्म्मधनस्याथ, मित्रस्य वचनक्रमम् । श्रुत्वा श्रीपतिरत्यन्त, मुदित प्राह त प्रति ॥ ४५ ॥

धर्ममित्र ! ममाथ त्वं, सत्यं वद करोमि किम् ?। तेनोक्तं मुञ्च मिथ्यात्वं, सम्यक्त्वं, धेहि सर्वथा ॥४६॥
या देवे देवताबुद्धिर्गुरौ च गुरुतामतिः । धर्म्मे च धर्म्मधीः शुद्धा, सम्यक्त्वमिदमुच्यते ॥ ४७ ॥
अदेवे देवबुद्धिर्या, गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च, मिथ्यात्वं तद्विपर्ययात् ॥ ४८ ॥
सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च, देवोऽर्हन्परमेश्वरः ॥ ४९ ॥
महाव्रतधरा धीरा, भैक्ष्यमात्रोपजीविनः । सामायिकस्था धर्मोपदेशका गुरवो मताः ॥ ३५० ॥
दुर्गतिप्रपतत्प्राणिधारणाद्धर्म उच्यते। संयमादिर्दशविधः, सर्वज्ञोक्तो विमुक्तये ॥ ५१ ॥
धर्मस्य तस्य लिङ्गानि, धर्मक्षान्तिरहिंसता । नयो दानञ्च शीलञ्च, योगो वैराग्यमेव च ॥ ५२ ॥
ये स्त्रीशस्त्राक्षसूत्रादिरागाद्यङ्ककलङ्किताः । निग्रहानुग्रहपरास्ते देवाः स्युर्न मुक्तये ॥ ५३ ॥
सर्वाभिलाषिणः सर्वभोजिनः सपरिग्रहाः। अब्रह्मचारिणो मिथ्योपदेशा गुरवो नतु ॥ ५४ ॥
मिथ्यादृष्टिभिराम्नातो, हिंसाद्यैः कलुषीकृतः । स धर्म्म इति वित्तोऽपि, भवभ्रमणकारणम् ॥ ५५ ॥
गोमेधनरमेधाश्वमेधाद्यध्वरकारिणाम् । याज्ञिकानां कुतो धर्म्मः, प्राणिघातविधायिनाम् ? ॥ ५६ ॥

दुरिततरुकुठार पुण्यतीर्थप्रधान, पिवत जितविपक्ष दर्शनाख्य सुधाम्बु ॥ ५९ ॥

एव मित्रस्य वचसा, मुक्त्वा मिथ्यात्वकारणम् । आराधयत्सदा श्रेष्ठी, जिनधर्म कृपामयम् ॥ ३६० ॥
जयत्यति(स जल्पति)नमस्कार, त्रिसन्ध्य देवपूजनम् । आवश्यक द्विसन्ध्यञ्च, करोति स्म सुभावत ६१
वन्दते स्म गुरून्नित्य, दान दत्ते स्म साधवे । आराधयञ्च पर्वाणि, चकार विविधन्तप ॥ ६२ ॥
अमारि तीर्थयात्राञ्च, दीनोद्धार तथाऽकरोत् । सप्तक्षेत्रेषु वित्तस्य(ञ्च), व्ययति स्म महामति ॥६३॥
इत्यञ्चाखण्डित पुण्य, कुर्वत प्रियया सह । श्रेष्ठिन तस्य पण्मासा, व्यतिक्रान्ता महासुखम् ॥ ६४ ॥

पाश्चात्यनिशि सोऽन्येद्युर्गतनिद्रो व्यचिन्तयत् । गता धर्मेण षण्मासाः, किं फलं मे भविष्यति? ॥६५॥
जैने मते कृते किन्तु, फलसिद्धिर्न दृश्यते । किमेष निष्फलो धर्मः ?, इति ध्यायत्यसौ यदा ॥ ६६ ॥
प्रत्यक्षीभूय तं प्राह, तदा शासनदेवता । रे मूढ ! जितं फलकं, मा मुधा हारयाधुना ॥६७॥ (युग्मम्)
यथाऽब्धौ भग्नपोतोऽपि, संप्राप्ते फलके सति । तटासन्नङ्गतः कश्चिद्वायुना तत्र नीयते ॥ ६८ ॥
तथान्तरायकर्माब्धेर्यावत्त्वं पारमागतः । तावच्छङ्काकुवातेन, पुनः पश्चात्प्रपात्यसे ॥ ६९ ॥
शङ्कया रहितो धर्मः, कृतो भूरिफलप्रदः । संशयेन कृतं सर्वं, जलरेखेव तद्यथा ॥ ३७० ॥
स्थले जलं जले रेखा, बुभुक्षितमुखे फलम् । शङ्कया सहितं पुण्यं, स्थिरत्वं नैव जायते ॥ ७१ ॥
गाहा—आरंभे नत्थि दया, महिलासङ्गेण नासए बंभं । सङ्काए सम्मत्तं पवज्जा अत्थगहणेणं ॥ ७२ ॥
शङ्कया दूष्यते सम्यग्दर्शनं मुक्तिदायकम् । चित्रं लुप्ति(प्येत)मप्येव,स्वैरिण्येव महाकुलम् ॥ ७३ ॥
यथा निर्गमितं जन्म, धनपालेन शङ्कया । सम्यक्त्वं धर्मकार्यं च, तथा गच्छति शून्यताम् ॥ ७४ ॥
तद्यथा—पुरे क्षितिप्रतिष्ठाख्ये, धनो नाम धनी वणिक् । धनश्री प्रेयसी तस्य, धनपालसुतस्तयोः॥७५॥

अमुक्तबालभावेऽस्मिन्, सञ्जज्ञे जननीमृति । महद्दु खनिदान हि, बालाना जननीमृति. ॥ ७६ ॥
यत.—शिशूना जननीनाशो, भार्यानाशस्तु यौवने । वृद्धस्यात्मजनाशश्च, दु खमेभ्यः पर नहि ॥७७॥
धनपालमसु बाल, धनो वीक्ष्य व्यचिन्तयत् । पूतर. कुञ्जरीकर्तुं, कथ शक्य स्त्रियं विना ? ॥ ७८ ॥
विमृश्येति धन. श्रेष्ठी, धनदाता धनश्रियम् । उपायस्त प्रशस्ताङ्गो, गृहिणी गृहभारिताम् ॥ ७९ ॥
यत —न गृह गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहन्तु गृहिणीहीनमरण्यसदृश मतम् ॥ २८० ॥
तत सूनुमसूतैषा, विषयारम्भिक फलम् । सपत्नीसभव पुत्र, निजपुत्रमिवैक्षत ॥ ८१ ॥
पठितु ज्ञानशालायामिमौ यातो महामुदा । पयस्समरिच पुष्टे (पुष्ट्यै), प्रगे साऽपाययत्तराम् ॥ ८२ ॥
तत्पुत्रो धनदेवस्तु, निश्शङ्क पिबति प्रगे । पय.पान विना पाठः, कथ शक्येत बालकै. ? ॥ ८३ ॥
पय समरिच दृष्ट्वा, समाक्षिकविरेकया । धनपाल पपौ दुग्ध, विमातुः शङ्कया सदा ॥ ८४ ॥
विमातेयं कथ मे स्यात्, सर्वथा हितकारिणी ? । एव दुश्चिन्तनादेष, क्षीयते स्म दिने दिने ॥ ८५ ॥
तस्यास्ताडनभीतोऽसौ, धनपाल पयोऽपिबत् । अभूद्वल्गुलवातोऽथ, जीवितव्यविघातकः ॥ ८६ ॥

वैद्यानां दर्शितः सोऽथ, धनेन धनदायिना । नासावुवाच दुर्ध्यातं, मतिः कर्मानुसारिणी ॥ ८७ ॥
क्षताङ्गः प्राप पञ्चत्वमेष वल्गुलवायुना । शङ्कया तङ्कया किं न, भवेद्भवभृताङ्किल ? ॥ ८८ ॥
निःशङ्कं धनदेवोऽथ, पिबन् दुग्धमनारतम् । अधीती क्रमशो गेहाधिपती राजति स्म सः ॥ ८९ ॥
इहलोकसुखादेष, शङ्कया निरमुच्यत । निर्वृत्तेर्जनकात्तद्वत्, सम्यक्त्वात्तत्त्वसेवधेः ॥ ३९० ॥
यतः—धनेन हीनोऽपि धनी मनुष्यो, यस्यास्ति सम्यक्त्वधनं प्रधानम् । धनं भवेदेकभवे सुखार्थं, भवे
भवेऽनन्तसुखा सुदृष्टिः ॥ ९१ ॥
श्रीपते ! शृणु मद्वाक्यं, संशयेन त्वया खलु । दूषितो जिनधर्मोऽथ, तत्फलं तव कथ्यते ॥ ९२ ॥
यथा जात्यं महारत्नवरं मुक्ताफलं पुनः । रेखया लाञ्छितं हीनं, स्वल्पमूल्यं भवेत्किल ॥ ९३ ॥
जिनधर्मप्रभावेन, तथा भावी सुतस्तव । परं त्वं सुतसौख्यादि, लप्स्यसे नैव शङ्कया ॥ ९४ ॥
तथा श्रीपतिना प्रोक्तमस्ति लोकोक्तिरीदृशी । बुभुक्षातो हि रब्बाया, अपि पानं भवेद्वरम् ॥ ९५ ॥
अवर्षणं विनाश्वत्थबिन्दुपातोऽपि तापहृत् । असन्ततेरपीदृक्षः, सुतो मेऽस्तु सुरीश्वरि ! ॥ ९६ ॥

वन्ध्योऽयमिति लोकेऽत्र, मम माभूत्कदर्थना । इत्युक्ता श्रेष्ठिना देवी, वर दत्त्वा तिरोदधे ॥ ९७ ॥
प्रत्यूषे स प्रिय प्राह, रजन्यामद्य सुन्दरि ।। प्रोक्तं शासनदेव्या मे, तव पुत्रो भविष्यति ॥ ९८ ॥
श्रुत्वेनमवदत्कान्ता, स्वामिन् ! स्वप्ने मयापिच । पूर्णकुम्भ फलोपेतो, दृष्टो मन्दिरमध्यग ॥ ९९ ॥
भविष्यति सुतो नून, एतत्स्वप्नानुभावत. । इति प्रमुदितौ तौ द्वौ, विचार चक्रतु मिथ ॥ ४०० ॥
तद्दिनात्स्वर्गतश्च्युत्वा, पुण्यात्मा कोऽपि निर्जर । उत्पन्न श्रीमतीकुक्षौ, जाताश्च शुभदोहदा ॥ १ ॥
नवमासेषु पूर्णेषु, सार्धाष्टदिवसेषु च । श्रेष्ठिनी सुषुवे सूनु, मार्तण्डमिव पूर्वदिग् ॥ २ ॥
तदा वर्धापित श्रेष्ठी, स्वजनैरतिहर्षितै । सोत्साह उत्सव चक्रे, चक्रे चामारिघोषणम् ॥ ३ ॥
सकल बलिकर्मादि, तदा चन्द्रार्कदर्शनम् । षष्ठीजागरणं चापि, सर्वमेतत्कृत तथा ॥ ४ ॥
धर्म्मदत्तेति तन्नाम, कृत धर्मो ददौ यत । पित्रोर्मनोरथै सार्ध, ववृधे स दिने दिने ॥ ५ ॥
कदोत्सङ्ग कदा स्कन्धे, हस्ताद्धस्तेषु सञ्चरन् । पोषितो लालितश्चापि, जात षड्वार्षिक सुत. ॥ ६ ॥
सञ्जाते सप्तमे वर्षे, स महोत्सवपूर्वकम् । पठितुं लेखशालाया, मुक्त पित्रा महामति ॥ ७ ॥

यतः—विना विद्याः सुरूपोऽपि, नार्थ्यते कुत्रचिन्नरः । यथा चा(१)तुलिपुष्पाणि, नार्थ्यन्ते रूपवन्त्यपि ॥ ८ ॥
किं कुलेन विशालेन, विद्याहीनस्य जन्मना ? । सविद्यः पूज्यते लोके, निर्विद्यः परिभूयते ॥ ९ ॥
अजातमृतमूर्खेभ्यो, मृताजातौ सुतौ वरौ । यतस्तौ स्वल्पदुःखाय, यावज्जीवं जडो दहेत् ॥ ४१० ॥
विद्या यशस्करी पुंसां, विद्या श्रेयकरी मता । सम्यगाराधिता विद्या, देववत्कामदायिनी ॥ ११ ॥
विद्वत्त्वं च नृपत्वञ्च, नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा, विद्वान्सर्वत्र पूज्यते ॥ १२ ॥
अनभ्यासे विषं शास्त्रं, अजीर्णे भोजनं विषम् । दरिद्रस्य विषं गोष्ठी, वृद्धस्य तरुणी विषम् ॥ १३ ॥
गतेऽपि वयसि ग्राह्या, विद्या सर्वात्मना बुधैः । यदीह स्यान्न फलदा, सुलभा चान्यजन्मनि ॥ १४ ॥
देवताराधने दाने, विद्याभ्यासे सदौषधे । क्षमायां परमो यत्नः, कर्त्तव्यो विजिगीषुणा ॥ १५ ॥
धनहीनो धनहीनस्तु, न धनं कस्य निश्चलम् । विद्याहीनस्तु यः कश्चित्, सर्वहीनः स वस्तुषु ॥ १६ ॥
विद्या यद्यस्ति का चिन्ता, वराकोदरपूरणे । शुकोऽपि कूरमश्नाति, चत्वरे राममुच्चरन् ॥ १७ ॥
यत्र विद्यागमो नास्ति, यत्र नास्ति धनागमः । यत्र आत्मसुखं नास्ति, न तत्र दिवसं वसेत् ॥ १८ ॥

(१) आवल इति देशीयाभिधानम्

जलविन्दुनिपातेन, क्रमश' पूर्यते घट । स हेतु· सर्वविद्याना, धर्मस्य च धनस्य च ॥ १९ ॥
पाण्डित्ये गणिते शिल्पे, तथा सर्वकलासु च । धर्मार्थकाममोक्षेपु, पुरुप कुशलो भवेत् ॥ ४२० ॥
पण्डितेपु गुणा सर्वे, मूर्खे दोपास्तु केवला । तस्मान्मूर्खसहस्रेण, प्राज्ञ एको न लभ्यते ॥ २१ ॥
वर पर्वतदुर्गेपु, भ्रान्त वनचरै सह । मा मूर्खजनसपर्क , सुरेन्द्रभवनेष्वपि ॥ ८८ ॥
मूर्खस्तु परिहर्त्तव्य , प्रत्यक्षो द्विपद पशु । विध्यते वाक्यशल्येन, अदृष्ट· कण्टको यथा ॥ २२ ॥
मूर्खशिष्योपदेशेन, दुष्टस्त्रीभरणेन च । द्विपता सप्रयोगेन, पण्डितोऽप्यवसीदति ॥ २३ ॥
मूर्खाणा पण्डिता द्वेष्या, अधनाना महाधना । पण्याङ्गना कुलस्त्रीणा, सुभगानाञ्च दुर्भगा ॥ २४ ॥
धनधान्यप्रयोगेपु, विद्यासग्रहणेपु च । आहारे व्यवहारे च, सोद्यमश्च सदा भवेत् ॥ २५ ॥
यत —अलसस्य कुतो विद्या,?अविद्यस्य कुतो धनम् ?।अधनस्य कुतो मित्रममित्रस्य कुतो वलम्?॥२६॥
अवलस्य कुतो मानो, ह्यमानस्य कुतो यश ? । यशोरहितदेहस्य, जीवितान्मरण वरम् ॥ २७ ॥
अत एव वरा विद्या, सेविता सर्वकार्यकृत् । यस्या प्रसादतो विश्वे, गुरुशुक्रसमो भवेत् ॥ २८ ॥

किङ्गर्जितेन वृषभेण पराजितेन ?, किङ्कोकिलेन च रुतेन गते वसन्ते? । किङ्कालरेण बहुशास्त्रपरिग्रहेण?,
किञ्जीवितेन पुरुषेण निरर्थकेन? ॥ २९ ॥

गुरुशुश्रूषया विद्या, पुष्कलेन धनेन वा । अथवा विद्यया विद्या, चतुर्थी नोपलभ्यते ॥ ४३० ॥

हेतुयुक्तञ्च तथ्यञ्च, सत्यं साधु जनप्रियम् । मूर्खो वक्तुं न जानाति, स जिह्वा किं नु रक्षति? ॥३१॥

विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमा विद्या, स्त्रीरत्नं दुष्कुलादपि ॥ ३२ ॥

सन्तोषस्त्रिषु कर्त्तव्यः, स्वदारे भोजने धने । त्रिषु चैव न कर्त्तव्यो, दाने चाध्ययने तपे ॥ ३३ ॥

चतुर्दशीकुहूराकाष्टमीषु न पठेन्नरः । सूतके च तथा राहुग्रहणे चन्द्रसूर्ययोः ॥ १०१ ॥

अथाल्पकालतः सर्वं, पूर्वाधीतमिव श्रुतम् । पठितं धर्मदत्तेन, कलाः शेषाश्च शिक्षिताः ॥ ३४ ॥

स पश्चात्पुण्यशालायां, पठनार्थं निवेशितः । संप्राप्ता साधुपार्श्वे च, तेन धर्मस्य सत्कला ॥ ३५ ॥

गाहा—बावत्तरिकलाकुसला, पण्डियपुरिसा अपण्डिया चेव । सव्वकलाण य पवरं, धम्मकलं जे ण
जाणन्ति ॥ ३६ ॥

आवश्यक द्विवेल च त्रिकाल जिनपूजनम् । चक्रे धर्म्मी धर्मदत्तो, विशेपाज्जनकादपि ॥ ३७ ॥
प्रत्याख्यान करोति स्म, प्रासुकञ्च जल पपौ । बालकोऽपि गृहस्थोऽपि, यतिवत्स क्रिया व्यधात्॥३८॥
क्रमेण प्राप तारुण्य, वनिताजनमोहनम् । सुता तेन महेभ्यस्य, परिणीता महोत्सवात् ॥ ३९ ॥
पर शास्त्ररसे मग्नो, नामुचत् पुस्तिकाङ्करात् । बालत्वे य कृतोऽभ्यासस्तत्रैव रमते जन ॥ ४४० ॥
यथा कस्मिन्पुरे श्राद्धो, जिनदत्ताभिधोऽभवत् । अश्वादिकपशूपास्ति, न करोति कदापि स ॥४१॥
एकदा तत्पुरेशस्य, नवोऽश्व केन ढौकित । जात्याश्वलक्षणोपेत, राजा त वीक्ष्य हर्पित. ॥ ४२ ॥
अन्यस्य कस्य विश्वासो, भूपतेर्नैव जायते । तेनासौ जिनदत्तस्य, हयो रक्षार्थमर्पित ॥ ४३ ॥
दत्त्वाश्वरक्षणे शिक्षा, धन राज्ञा स मानित' । हयं लात्वा गतो गेहे, श्रावकोऽसौ व्यचिन्तयत् ॥४४॥
हा कोऽय मम सन्ताप ?, पतितः केन कर्मणा? । पशुपालनज दु ख, नृणा भवति दुस्सहम् ॥ ४५ ॥
मित्रपुत्रकलत्रादे , विश्वसामि न कस्यचित् । यत्नेन रक्षणीयोऽय, राजकार्यं हि दुष्करम् ॥ ४६ ॥
ध्यात्वेति हृदि तेनाथ, गुप्तस्थाने धृतो हय. । परिचर्यां स्वय कुर्याज्जलपाने स्वय व्रजेत् ॥ ४७ ॥

जैनप्रासाद एकोऽस्ति, सरोमार्गे च तत्र सः । तिस्रः प्रदक्षिणा दत्त्वा, जिनं नत्वाऽग्रतोऽगमत् ॥४८॥
अश्वं सरसि पायित्वा, वलित्वा तज्जिनालये । पुनः प्रदक्षिणा दत्त्वा, जिनं नत्वाऽगमद् गृहे ॥ ४९ ॥
जलपानक्षणे नित्यमेवं कुर्वत्युपासके । सुरालयं सरश्चैव, स जानाति तुरङ्गमः ॥ ४५० ॥
अन्यमार्गे न यात्येव, प्रेरितोऽपि हयोत्तमः । राज्ञा तस्य प्रभावेन, जिता अन्ये नृपा घनाः ॥ ५१ ॥
सप्रभावो हयो ज्ञातस्ततः केनापि वैरिणा । प्रेषितः कपटी कोऽपि, हयापहारहेतवे ॥ ५२ ॥
स दम्भश्रावकीभूय, गतोऽश्वस्थितमन्दिरे । साधर्मिकतया तस्य, श्राद्धेनावर्जना कृता ॥ ५३ ॥
तेन मायाविना वार्ता, कृता पुण्यस्य भूरिशः । श्राद्धेन भद्रकत्वात्तु, तच्चित्तं नोपलक्षितम् ॥ ५४ ॥
यतः–विद्यादम्भः क्षणस्थायी, दानदम्भो दिनत्रयम् । रसदम्भस्तु षण्मासान्, धर्मदम्भस्तु दुस्तरः ५५
सज्जनेनापि किं तेन, यः शङ्खसमलक्षणः? । धवलो बहिरत्यन्तमन्तस्तु कुटिलस्थितिः ॥ ५६ ॥

काव्यं–कोऽर्थान्प्राप्य न गर्वितो ? विषयिणः कस्यापदोऽस्तङ्गताः ? ।
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः? ।

क कालस्य न गोचरान्तरगत ? कोऽर्थी गतो गौरवम् ? ।
को वा दुर्जनवागुरासु पतित , क्षेमेण जात· पुमान् ?॥ ५७ ॥

अन्यदा तस्य दत्तस्य, श्राद्धस्याह्वानहेतवे । विवाहावसरे मित्रं, परग्रामात्समाययौ ॥ ५८ ॥
तं धर्मबान्धव ज्ञात्वा, कपटश्रावक तदा । रक्षार्थं तस्य दत्वाश्व, गतो ग्रामे स मित्रयुक् ॥ ५९ ॥
मार्जारस्य यथा दुग्ध, रक्षणार्थं समर्प्यते । तथा मायाविनस्तस्य, तुरगोऽसौ समर्पित ॥ ४६० ॥
गृहे पुत्रकलत्रादेर्दत्ता शिक्षा न कस्यचित् । तत स एव मायावी, चकार हयपालनम् ॥ ६१ ॥
रात्रौ घोरान्धकारे स, पापात्मा कपटी नर । अश्वमारुह्य वेगेन, निर्गतो मन्दिराद्बहि ॥ ६२ ॥
श्राद्धेन शिक्षितो वाजी, मार्गेऽन्यस्मिन्न गच्छति । चैत्ये सरोवरे याति, पश्चादायाति मन्दिरे ॥ ६३ ॥
ताडितोऽपि कशाघातैरन्यमार्गे न गच्छति । क्रियमाणे गतायाते, विभाता सर्वशर्वरी ॥ ६४ ॥
अश्व मुक्त्वा स मायावी, प्रणष्टो दिवसोदये । आगत· श्रावको ग्रामात्, वाजीन्द्रक्षरणोत्सुक ॥६५ ॥
व्यलोकयद्यदा सोऽश्व, ददर्श पीडितं तदा । ज्ञात्वा मायाविवृत्तान्त, भूपतेस्त न्यवेदयत् ॥ ६६ ॥

यथैकमार्गवर्त्यैव, स बभूव तुरङ्गमः । तथाऽसौ धर्मदत्तोऽपि, शास्त्रैकरसिकोऽभवत् ॥ ६७ ॥
अन्येद्युः श्रेष्ठिनी प्राह, भर्तारं श्रीपतिं प्रति । सुतोऽयं सर्वशास्त्रज्ञो, दृश्यते मूर्खवद्भृशम् ॥ ६८ ॥
काव्यम्—काव्यङ्करोतु परिजल्पतु संस्कृतं वा, सर्वाः कलाः समधिगच्छतु वाच्यमानाः ।
लोकस्थितिं यदि न वेत्ति यथानुरूपां, सर्वस्य मूर्खनिकरस्य स चक्रवर्ती ॥ ६९ ॥
लोकमार्गं नरो यावन्नैव जानाति कश्चन । शृङ्गपुच्छपरिभ्रष्टः, स ध्रुवं पशुरेव हि ॥ ४७० ॥
यथा वेदचतुर्वेत्ताप्यन्यशास्त्रश्रमं विना । विप्रः पशुसमस्तद्वद्, व्यवहारं विना नरः ॥ ७१ ॥
श्लोकः—अपठाः पण्डिताः केचित्, केचित्पाठितपण्डिताः।अपठाः मूर्खकाः केचित्, केचित्पाठितमूर्खकाः७२
नात्यन्तं सरलैर्भाव्यं, गत्वा पश्य वनस्पतीः । सरलास्तत्र छिद्यन्ते, कुब्जास्तिष्ठन्ति पादपाः ॥७३॥
नातिमौग्ध्यं न काठिन्यं, नात्युच्चं नातिनीचकम् । एकान्तं किन्तु नो रम्यं, सर्वं समतया शुभम् ॥७४॥
विद्याभिरनवद्याभिरपि कार्यं न सिध्यति । व्यवहारज्ञता नो चेच्चत्वारोऽत्र निदर्शनम् ॥ ७५ ॥
यथा चन्द्रपुरे पूर्वं, बभूव चन्द्रजिन्नृपः । राज्ञी चन्द्रानना तस्य, मन्त्रीशो बुद्धिसागरः ॥ ७६ ॥

राज्ञोऽग्रे कथित केन, विद्वानेव नरो वर । मन्त्रिणोक्तं बुधो मूर्खो, व्यवहार न वेत्ति य ॥ ७७ ॥
तत्परीक्षाकृते राज्ञा, चत्वारो राजपुत्रका । सुरूपा सुभगा' सौम्या , पाठिता भूमिमन्दिरे ॥ ७८ ॥
व्याकरण प्रमाणञ्च, ज्योतिष वैद्यक तथा । पाठयित्वा पण्डितेन, ते भूपस्य समर्पिता ॥ ७९ ॥
तदा भूपतिना विप्रो, द्रव्ये सन्तोष्य वा(चा)लितः। पुत्रा सवाहिता पित्रा, सर्वे विशतिवार्षिका ४८०
स्वसमीपे निविष्टास्ते, पृष्टा भूपेन किञ्चन । उत्तर दिव्यभाषाभि , कुमारा कोविदा ददु ॥ ८१ ॥
प्रधान प्राह भूपोऽथ, कीदृशा नन्दना बुधा । एते पठितमूर्खा हि, प्रधानोऽप्यब्रवीदिति ॥ ८२ ॥
कथ मूर्खा नृपोऽप्यूचे?, भूयोऽपि सचिवोऽब्रवीत् । लोकाचार न जानन्ति, शुकवत्पठिता अमी ॥८३॥
पक्वान्न पञ्चधा मुक्त, मुक्ता फलहुलिस्तथा । कुमारा खज्जकं वीक्ष्य, प्रजल्पन्ति परस्परम् ॥ ८४ ॥
किमिद हि बहुच्छिद्र, चतुष्कोण भयावहम् । नैव किञ्चिद्वय विद्मो, यदत्रैतत्किमुच्यते ॥ ८५ ॥
इत्युक्त्वा ते समुत्थाय, प्रोचुरुच्चैरिद वच । यत्र च्छिद्र किमप्यास्ति, नात्र स्थेय बुधै क्षणम् ॥ ८६ ॥
छिद्रेऽनर्था भवन्त्युच्चैस्तत्त्याज्य स्थानक तत । चलितास्तेऽपि चत्वारस्त्यक्त्वा भोजनभाजनम् ॥८७॥

ज्ञातं तच्चेष्टितं राज्ञा, मन्त्रीशकृतसंज्ञया । लोकस्थितिं न जानन्ति, ह्येते वेदज्ञवाडवाः ॥ ८८ ॥
एषामाचरणं ज्ञात्वा, विलोक्यं नष्टचर्यया । इत्युक्त्वा मन्त्रिणा तेन, तत्पृष्ठे प्रहितो नरः ॥ ८९ ॥
यावदग्रे गता राजपुत्रास्तावत् खरः पुनः । राजद्वारे स्थितो दृष्टो, रङ्गेण परितः स्फुरन् ॥ ४९० ॥
अन्योऽन्यं ते च पृच्छन्ति, कोऽयं पञ्चमबान्धवः । खरं शास्त्रप्रमाणेन, भ्रातृबुद्ध्या स्पृशन्ति ते ॥९१॥
यतः—आतुरे व्यसनप्राप्ते, दुर्भिक्षे शत्रुविग्रहे । राजद्वारे स्मशाने च, यस्तिष्ठति स बान्धवः ॥ ९२ ॥
इति मत्वा खरं लात्वा, पुनरप्यग्रतोऽगमन् । वेगाद्गच्छन्तमुष्ट्रं वाऽपश्यन्नेकं कुमारकाः ॥ ९३ ॥
पुनः पृच्छन्ति भो भ्रातः! कोऽयं गच्छति वेगतः । परः प्राह न जानीथ, धर्म्मस्त्वरितगाम्ययम् ॥९४॥
चलं चित्तं चलं वित्तं, चलं यौवनमावयोः । प्रसारय करं पात्र(त्रे), धर्म्मस्य त्वरिता गतिः ॥ ९५ ॥
स्थैर्यं सर्वेषु कार्येषु, शंसन्ति नयपण्डिताः । बह्वन्तराययुक्तस्य, धर्मस्य त्वरिता गतिः ॥ ९६ ॥
सर्वे वदन्ति हुं ज्ञातं, धर्मस्त्वरितगाम्ययम् । इत्युक्त्वा कन्धरायां ते, गृहीत्वा चोष्ट्रमूचिरे ॥ ९७ ॥
धर्म त्वं भूरिभाग्येन, प्राप्त इष्टश्च दीयते । उक्त्वैवमौष्ट्रग्रीवायां, रासभं ते बबन्धिरे ॥ ९८ ॥

सुकुले योजयेत् कन्यां, पुत्रे विद्या नियोजयेत् । व्यसने योजयेत् शत्रुमिष्टं धर्मे नियोजयेत् ॥ ९९ ॥
यन्त्रितौ रासभोष्ट्रौ तौ, गृहीत्वा चलिता पथि । तत्कौतुक जना प्रेक्ष्य, जल्पन्तीति परस्परम् ॥५००॥
निर्द्रव्य प्रेक्षणं लोका, एत्य पश्यत पश्यत । दक्षत्व राजपुत्राणा, पठिताना हि दृश्यते ॥ १ ॥
इति हास्यास्पद जातास्ततो राज्ञा निराकृता । नागन्तव्यमरे मूर्खा !, युष्माभिर्नगरे मम ॥ २ ॥
रथ एको महाजीर्णो, वृषभद्वयसयुत । प्रधानवचसा राज्ञा, कुमाराणा समर्पित ॥ ३ ॥
त रथ ते समारुह्य, चेलुरेकादिशं प्रति । एकस्मिन्नगरासन्ने, कानने च समागता ॥ ४ ॥
भोजनावसरे तत्राप्येक पाकाय सस्थित । एको जगाम शाकार्थमेको घृतकृते गत ॥ ५ ॥
एको गतो वलीवर्द्दचारणाय कुमारक । पृथक्पृथक् क्रिया कर्तुमेव सर्वे समुद्यता ॥ ६ ॥
जात कलकल शब्द , पाकभाण्डान्तरे तदा । तेनाऽचिन्त्यस्य शब्दस्य, निष्पत्तिर्नास्ति लक्षणे ॥ ७ ॥
मिथ्याशब्द वदन्त्येतदस्य शिक्षा ददाम्यहम् । ततो लकुटमुत्पाट्य, प्रहार भाजनेऽमुचत् ॥ ८ ॥
भग्न भाण्डमभून्मौनं, लग्ना शिक्षाऽस्य सत्यत । इत्युदित्वा सुख सुप्तो, निश्चिन्तो जडधीनर ॥ ९ ॥

वातश्लेष्मादिकारीणि, त्यक्त्वान्यव्यञ्जनान्यथ । सर्वरोगहरं निम्बं, लात्वा द्वितीय आगतः ॥५१०॥
तृतीयो घृतमादाय, गच्छन्नेवमचिन्तयत् । घृताधारेऽत्र किं पात्रं, ? पात्राधारे नु किं घृतम् ? ॥ ११ ॥
परीक्षार्थमधः पात्रं, कृतं यावद्गतं घृतम् । घृतं यातु परं भग्नः, सन्देह इति सोऽब्रवीत् ॥ १२ ॥
वृषौ हृतौ च चौरेण, पश्यन्नपि चतुर्थकः । तरुच्छायाश्रितो मूर्खो, लग्नभावं व्यलोकयत् ॥ १३ ॥
स्थिरलग्ने स्थिरांशे च, स्थिरे भवति चन्द्रमाः । इति योगे समायाते, स्वयमायास्यतो वृषौ ॥ १४ ॥
इति ज्ञात्वा बलीवर्दवालनार्थं स नोत्थितः । मिलित्वा तेऽथ चत्वारः, पुरमध्ये समागताः ॥ १५ ॥
भ्रमन्तस्तत्र दीनास्या, वराकास्ते बुभुक्षिताः । दिनस्य पश्चिमे यामे, सोमश्रेष्ठ्यापणे गताः ॥१६ ॥
प्रश्नपूर्वं गृहे नीत्वा, दत्वा वैतालिकं ततः । प्रभाते श्रेष्ठिना तेषां, कार्यं दत्तं पृथक् पृथक् ॥ १७ ॥
एकस्याज्यभृतः कूटो, विक्रयार्थं समर्पितः । मार्गे भोः तस्कराः सन्ति, गन्तव्यं सावधानतः ॥ १८ ॥
एवं शिक्षा प्रदत्त्वाऽसौ, चालितो वेगतो गमन् । अर्धमार्गे महारण्ये, कूटमुद्घाट्य सोऽब्रवीत् ॥ १९ ॥
भो अत्र कोऽपि चोरोऽस्ति, स प्रकटीभवत्विह । उक्त्वैवं कूटमुद्घाट्य, यावदालोकयत्स्वयम् ॥ ५२० ॥

प्रतिरूपमाज्यमध्ये, दृष्ट्वा चित्ते चमत्कृत । श्रेष्ठिना कथित सत्य, प्रत्यक्षश्चौर ईक्ष्यते ॥ २१ ॥
दास्यामि साम्प्रत शिक्षामेवमुक्त्वाऽक्षिपरिक्षितौ । कूटक तमधोवक्त्र, गत सर्पि सतस्करम् ॥ २२ ॥
चिन्तित तेन यात्वाज्य, कृत रम्य मयाधुना । मृत पुत्र' पर वध्वा, लदसटाटो निवारित. ॥ २३ ॥
अथ कूटङ्करे कृत्वा, स पश्चाद्वलितो रयात् । रथस्थौ भ्रातरौ चान्यौ, द्वौ काष्ठाय वने गतौ ॥ २४ ॥
मार्गे रथस्य चित्कार शब्द श्रुत्वेत्यवोचताम् । रोदत्येप रथ कस्मात्, कश्चिद्रोगो विभाव्यते ॥ २५ ॥
नुक्त्वा रथ समुत्तीर्णौ, तौ द्वौ यावदपश्यताम् । तावन्न श्रूयते शब्दो, मृतोऽसौ मौनमाश्रितः ॥२६॥
एव विचिन्त्य सस्कार, विधाय शकटस्य तौ । स्नानार्थ तटिनीतीरे, गत्वा स्नान च चक्रतुः ॥ २७ ॥
अथाऽस्मिन्समये तत्र, वान्धवो घृतविक्रयी । तृषार्त्तो जलपानार्थ, आगतो तटिनीतटे ॥ २८ ॥
त्रयोऽपि मिलितास्तत्र, वहिरागत्य नीरत । मिथो जल्पन्ति नो नद्या, विश्वास क्रियते बुधै ॥२९॥
यत –नदीनाञ्च नखीनाञ्च, शृङ्गिणा शस्त्रपाणिनाम् । विश्वासो नैव कर्त्तव्य, स्त्रीषु राजकुलेषु च५३०
इति मत्वा तदा मुग्धा, धूर्त्तत्वरहिता मिथ । गणयन्तो विनात्मान, सर्वान्सभालयन्ति ते ॥ ३१ ॥

मिथो वदन्त्यहो एको, जनः किं नोऽत्र दृश्यते । वाहिन्या भक्षितो भ्राता, रुदन्तीति मुहुर्मुहुः ॥ ३२ ॥
भूयोऽपि गणयन्नेको, नात्मानं गणयञ्जडः । इत्थं कृत्वा रुदन्नुच्चैर्गोपाला मिलितास्तदा ॥ ३३ ॥
कथं रुदिथ तैरुक्तं, किङ्गतं केन पीडिताः । तेऽप्याहुर्न गतं किञ्चिदेको भ्राता विलोक्यते ॥ ३४ ॥
यूयं कति स्थ तैः पृष्टं, ? मुग्धैरुक्तं वयं त्रयः । गोपैरुक्तं त्रयः स्थूला, दृश्यन्ते रुद्यते कथम् ॥ ३५ ॥
पतित्वा पादयोस्तेषां, कुमारा ऊचिरे त्रयः । यूयं दर्शयतास्माकं, तृतीयं हे नरोत्तमाः ! ॥ ३६ ॥
स्थापयित्वा त्रिकं श्रेण्यां, गणयित्वा च पाणिना । गोपालैर्दर्शितास्तेषां, ते त्रयोऽपि सहोदराः ॥ ३७ ॥
ततो जाता सहर्षास्ते, निर्गतास्तटिनीतटात् । यावत्सोमगृहे यान्ति, तावत्तुर्यकृतं शृणु ॥ ३८ ॥
सोमश्रेष्ठिगृहे मातामहा वृद्धाऽस्त्यचेतना । श्लेष्मालालादिभिर्व्याप्ता, जराकष्टेन पीडिता ॥ ३९ ॥

यतः काव्यम्—

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता, दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रञ्च लालायते ।
वाक्यं नैव शृणोति बान्धवजनः पत्नी न शुश्रूषते, धिक्कष्टं जरयाऽभिभूतमनुजं पुत्रोऽप्यवज्ञायते॥५४०॥

वदन दशनविहीन, वाचो न परिस्फुटा गता शक्ति । विगता चेन्द्रियवृत्ति', पुनरपि वलय कृत जरया ४१
वृद्धाया मक्षिकादेशोपद्रवस्य निवारणे । नीरपानादिशूश्रूषाकृते मुक्तश्चतुर्थक ॥ ४२ ॥
वृद्धायामथ सुप्तायां, मक्षिका मुखसस्थिता । उड्डापयन्नुवाचासौ, रे युष्मान्वादयाम्यहम् ॥ ४३ ॥
युष्माभिर्मक्षिका नात्रागन्तव्य कथ्यते घनम् । विकलास्ता न जानन्ति, पुनरागत्य सस्थिता. ॥ ४४ ॥
उड्डाप्य पुनरूचेऽसौ, वारयामि मुहुर्मुहु । सुशिक्षामथ दास्यामि, मम दोषो न दीयते ॥ ४५ ॥
इत्युक्त्वा मुशल स्थूलमुत्पाट्य मक्षिकामिपात् । विमुक्त तेन वृद्धाङ्गे, तद्घाताज्जरती मृता ॥ ४६ ॥
श्रेष्ठी निशम्य निर्घातमागाच्छीघ्रमुवाच च । कि कृत रे महादुष्ट ! जननी मारिता मम ॥ ४७ ॥
सोऽप्याख्यत्कि मया चक्रे ?, मक्षिका वारिता' पुन । न गच्छन्ति तदा शिक्षा, दत्ता चान्यत्कृत नहि ४८
तस्या विधाय सस्कार, स श्रेष्ठी मातृशोकत' । रुदन्नास्ति गृहे यावत्, तावत्तेऽप्यागतास्त्रय ॥ ४९ ॥
गद्गदाक्षरमूचाते, रथमृत्युमुभौ नरौ । एकेनोक्त प्रविष्टश्च, तस्कर कूटकान्तरे ॥ ५५० ॥
चतुर्णामपि चातुर्यं, ज्ञात्वैतत् श्रेष्ठिना तत । दत्वा च भोजनं किञ्चिद्, गृहान्निष्कास्य मोचिता ॥५१॥

ज्ञात्वा पाठितमूर्खाणां, स्वरूपं स्वचराननात् । आकार्य भूभुजा पुत्रा, व्यवहारविदः कृताः ॥ ५२ ॥

इति अव्यवहारज्ञकथा ।

श्रीमती प्राह हे नाथ! यथा ते राजपुत्रकाः । पठिताः कथिता अज्ञास्तथायं तव नन्दनः ॥ ५३ ॥

लेखशाला पुण्यशाला कामशाला तृतीयका । पूर्वमुक्ता हि हे नाथ! वर्गत्रितयसाधने ॥ ५४ ॥

ततोऽयं धर्मदत्तोऽपि, कामार्थौ नैव सेवते । तथा कुरु यथा नाथ! दक्षो भवति नन्दनः ॥ ५५ ॥

अथोचे श्रीपतिः पत्नीं, कोऽप्युपायोऽस्ति कामिनि! । कृते यस्मिन्नयं पुत्रः, सर्वत्र कुशलो भवेत् ॥५६॥

श्रेष्ठिनी प्राह पुत्रोऽयं, द्यूतकाराय दीयते । दक्षत्वं दिवसै स्तोकैः, कुर्वन्ति कितवा नृणाम् ॥ ५७ ॥

इत्थं श्रुत्वाऽब्रवीत् श्रेष्ठी, का कुबुद्धिरियं तव । उत्पन्ना विपरीता किं, मतिः सर्वार्थनाशिनी ?॥ ५८ ॥

यतः–रुष्टो देवोऽपि किं कस्य, चपेटां दातुमुद्यतः ? । किन्तु तां दुर्म्मतिं दत्ते, यया रुलति रङ्कवत् ॥ ५९ ॥

द्यूतं वेश्यानुरागश्च, धातुवादश्च विभ्रमः । योगिसेवा सदा रुष्टे, दैवेऽमी स्युः शरीरिणाम् ॥ ५६० ॥

कौपीनं वसनं कदन्नमशनं शय्याधरा पांसुला, जल्पोऽश्लीलगिरः कुटुम्बकजनो वेश्या सहाया विटाः;

व्यापारा परवञ्चनानि सुहृदश्चौरा महान्तो द्विप , प्राय सैप दुरोदरव्यसनिनः ससारवासक्रम· ॥६१॥
द्यूत सर्वापदान्धाम, द्यूत दीव्यन्ति दुर्धिय । द्यूतेन कुलमालिन्य, द्यूताय श्लाघ्यतेऽधम ॥ ६२ ॥
हे प्रिये ! शोभना नेव, बुद्धिरेपा यत सुत । कुससर्गात् कुतो दक्षो ?, जीवित कि विपाद्भवेत् ? ॥६३॥
कुसङ्गात्किल दोपा स्यु, सत्सङ्गात्सुगुणा पुन । न श्रुता कि पुरा वार्त्ता, वनस्थशुकयोर्द्वयो ॥ ६४ ॥
वने कापि द्रुशाखाया, नीडे जात शुकद्वयम् । तत्रैको जगृहे भिल्लैर्गृहीतस्तापसै पर ॥ ६५ ॥
किराततापसस्थाने, शृणुतस्तद्वचासि तौ । कोऽपि राजा हयाकृष्ट , समागाद्भिल्लसन्निधौ ॥ ६६ ॥
लक्ष याति व्रजेत्कोटिरिति भिल्लशुकोऽवदत् । तच्छ्रुत्वा धाविता भिल्ला , सर्वाङ्गे शोधितो नृप· ॥ ६७ ॥
नेव दृष्ट परं किञ्चिदश्व लात्वा समागता । पुनरेतत् शुकोऽवादीद्गता भिल्ला नृपान्तिके ॥ ६८ ॥
भूप प्रत्यूचुरस्माक, सत्य ज्ञानी शुकोऽवदत् । गुप्तं किमस्ति ते पार्श्वे, सत्य जल्पाभय तव ॥ ६९ ॥
राजाऽऽह सोऽत्रनील्लक्ष, कोटिरायाति मद्गृहे । इत्युक्ते तुरग दत्त्वा, भिल्लैर्मुक्तो नराधिप ॥ ५७० ॥
अग्रे तु मुनिकीरेण, प्रोक्त यात्यतिथिर्महान् । तापसैर्नृपमानीय, विहिताऽतिथिसत्क्रिया ॥ ७१ ॥

राज्ञा कीरङ्करे कृत्वा, पृष्टमेकेन ग्राहितः । सत्कारितोऽहमेकेन, शुकयुग्मे किमन्तरम्? ॥ ७२ ॥
शुक उवाच–माताप्येको पिताप्येको, मम तस्य च पक्षिणः।अहं मुनिभिरानीतः, स चानीतो गवाशिभिः ७३
गवाशनानां स गिरः शृणोति, अहञ्च राजन्मुनिपुङ्गवानाम् । प्रत्यक्षमेतद्भवतापि दृष्टं; संसर्गजा दोषगुणा भवन्ति ॥ ७४ ॥

इति शुकयुग्मकथानकम् ।

सन्तोऽपि खलसंसर्गात्, जायन्ते दोषभाजनम् ।
अतः कान्ते,? कुसंसर्गादहितो वार्यते यतः ( ऽपि हि वार्यते ) ॥ ७५ ॥

कुसंसर्गात्कुलीनानां, भवेदभ्युदयः कुतः ? । कदली नन्दति कियद्दरीतरुसन्निधौ ॥ ७६ ॥
कथं वल्लभपुत्रस्य, कुशिक्षा दीयते स्वयम् ? । वरङ्गतो मृतश्चापि, न वरं द्यूतसङ्गतिः ॥ ७७ ॥
श्रेष्ठिना वारिताप्येवं, नातिष्ठद्वनिता तदा । स्त्री भूपो याचको बालो, न मुञ्चन्ति कदाग्रहम् ॥ ७८ ॥
पुनः पुनः प्रकथनात्, श्रेष्ठी मेने प्रियावचः । शते प्रल(रू)पिते शब्दे, साति भुग्नाति सत्वरः? ॥ ७९ ॥

गाहा—जहा जाल तु मीणाणं, कुरङ्गाणञ्च वागुरा । पक्षीण पासओ वन्धो, तहा नारी नराण य ॥८०॥
जे गरुआ गभीरथिर, मोलूनाह (मोटो जीह) मरट्ट । महिला ते वि भमाडिया, जिम करि घरीय घरट्ट ८१॥
आहूय कितवान् दक्षानर्पित श्रेष्ठिना सुत । इभ्यपुत्र स्वहस्ते त, प्राप्य ते हर्षिता घनम् ॥ ८२ ॥
तद्दिने जलकेलिश्चाम्बुकेलि वनखेलनम् । सहैव धर्म्मदत्तेन, चक्रिरे द्यूतकारका ॥ ८३ ॥
जीव स्वभावतो नीचसङ्गति कुरुते भृशम् । कि पुन प्रेरित पित्रा?, गडोची निम्बमाश्रिता ॥ ८४ ॥
शिक्षा सा पैतृकी पूर्वा, पुण्यमार्गप्रवर्त्तिनी । त्यक्ता तेन तथा यद्वत्, मक्षिकाभि सुचन्दनम् ॥ ८५ ॥
कलास्तस्य गता शास्त्र, विस्मृत स्वल्पकालत । उच्छृङ्खलो महान् जातो, निष्पन्नस्तस्करो विट ॥८६॥
यथा दुग्ध विनष्ट स्याद्यथा कुथितकाञ्जिकम् । तथोत्तमकुलोत्पन्नो, विनष्टो दुस्सहो भवेत् ॥ ८७ ॥
अथ कामपताकाया, वेश्याया मन्दिरे स च । मोहार्थं कितवैर्नीत, इति तस्याश्च भाषितम् ॥ ८८ ॥
आवर्जनाऽस्य यत्नेन, कर्त्तव्या गणिके ! त्वया । तवासौ कल्पशाखीव, वाञ्छित पूरयिष्यति ॥ ८९ ॥
तत्र स्थितस्य तस्याथ, जनन्यप्रेषयद्धनम् । अमानन्द्रविण नित्य, स्वेच्छया विलसत्यसौ ॥ ९० ॥

निःशङ्कं रममाणस्य, सञ्जातं वर्षसप्तकम् ॥ ९१ ॥
वेश्यालुब्धस्य तौ मातापितरौ तस्य विस्मृतौ । नायात्यसौ कथमपि, जातौ तौ दुःखितौ तदा ॥ ९२ ॥
अन्यदा श्रेष्ठिना गेहे, सुतस्याकारणं कृतम् । यो मया शङ्कितो धर्मस्तत्कर्म्म समुपागतम् ॥ ९३ ॥
श्रेष्ठ्यूचे देवतावाणी, स्यात्कल्पान्तेपि नान्यथा । यतोऽयं स्वकृतो दोषः, परं कस्य च कथ्यते ॥ ९४ ॥
अकार्यकार्यतः क्षुण्णावूचतुर्दम्पती मिथः । दारिद्र्यरोगदुःखानि, बन्धनव्यसनानि च ॥९५॥
यतः–आत्मापराधवृक्षस्य, फलान्येतानि देहिनाम् । शुशोच स्वकृतं दोषं, यत्सुतो द्यूतकृत् कृतः ॥ ९६ ॥
बाढं वेश्यारते पुत्रे, श्रीपतिः श्रीमतीयुतः । पुत्र आकार्यते तथा ॥ ९७ ॥
पूर्वमुड्डाप्यते हस्ताद्यथा पश्चात्सदिप्यते । दत्वा प्राग् द्यूतकारेभ्यः, धर्मध्यानपरायणौ ॥ ९८ ॥
अथापुत्रमिवात्मानं, मन्वानौ तौ हि दम्पती । मुक्त्वा चिन्तां तदा जातौ, गेहे नागात्स नन्दनः ॥ ९९ ॥
विपन्नौ तौ शुभध्यानाज्जातौ देवौ महर्धिकौ । मातापित्रोर्मृतिं श्रुत्वा, सा कर्त्तनपरा सती ॥ ६०० ॥
अप्रेषयद्धनं तस्य, भार्याऽथो भर्तृयाचितम् । क्रमाद्द्रव्ये गते जाता, पेट भरी जइमाइ ॥१॥
यथा गाथा–कन्तविहूणी कामिनी, केहनइ सरणइ जाइ । रहिटीडइ पूणी करी,

तद्गृहे प्रेषिता दासी, पश्चादागाद्धन विना । गृहे निर्धनता ज्ञात्वाऽकया निष्कासितोऽथ स॰ ॥ २ ॥
निर्द्रव्यो नार्घति क्वापि, गृहे बाह्येपि सर्वथा । गोविन्दो ग्राममध्ये च, रुद्रोऽरण्ये नु सर्वदा ॥ ३ ॥
साकारोपि सविद्योपि, निर्द्रव्य क्वापि नार्घति । व्यक्ताक्षरस्तु वृत्तोपि, द्रम्म कूटो विवर्ज्यते ॥ ४ ॥
दास॰ सर्वोपि वित्तस्य, सेवन्ते निजनन्दना । पक्षिणोपि रथाङ्गाख्या, सर शुष्क सरन्ति किम् ? ॥५॥
सस्नेहो धर्मदत्तोऽपि, चिरकालोपसेवित । एकवारमनायाते, द्रव्ये निष्कासितस्तया ॥ ६ ॥

यत —सद्भावो नास्ति वेश्याना, स्थिरता नास्ति सपदाम् ।
विवेको नास्ति मूर्खाणा, विनाशो नास्ति कर्मणाम् ॥ ७ ॥

विरक्ता प्राणसन्देह, धनहानि पराभवम् । करोति सर्वमप्येव, वेश्या दुर्जनवन्नृणाम् ॥ ८ ॥
श्लोक —अभ्रच्छाया तृणादग्नि, खले प्रीति स्थले जलम्। वेश्याराग कुमित्रञ्च, षडेते बुद्बुदोपमा॰ ॥९॥
इत्यादि चिन्तयन्धर्म्मदत्तो निजगृहेऽगमत्। अपश्यद् गृहचेष्टाश्च, दुस्थावस्था समागत ॥ ६१० ॥
प्रतोली पतिता यत्र, भित्तय सन्ति जर्जरा । कपाटानि च भग्नान्यावासान् सोऽपश्यदीदृशान् ॥११॥

आत्मानं व्यसनासक्तं, निन्दन् गेहान्तरे गतः । कर्त्तयन्तीं प्रियां दृष्ट्वा, मुमोचाश्रूणि दुःख्यसौ ॥१२॥
दृष्ट्वा तं पुरुषं साप्याकारेङ्गितगुणैर्ध्रुवम् । उपलक्ष्य पतिं स्वीयं, प्रतिपत्तिमथाकरोत् ॥ १३ ॥
यतः—प्रजानां दैवतं राजा, पितरौ देवता सताम् । सुशिष्याणां गुरुर्देवो, नारीणां दैवतं पतिः ॥ १४ ॥
गाम्भीर्यं धैर्यमौदार्यं, चतुरत्वं विलोभता । सर्वसहत्वमाधुर्यमार्जवस्तु स्त्रियां गुणाः ॥ १५ ॥
आचमनं तया दत्वा, मुक्तश्च वरमासनम् । उपविष्टे प्रिये गेहस्वरुपं कथितं च तत् ॥ १६ ॥
सखेदं दिग्मूढमिव, प्रेक्ष्य कान्तं तु साब्रवीत् । प्राणेश ! त्वं यदा दक्षस्तदा किञ्चिद्गतं नहि ॥ १७ ॥
यदा त्वं सावधानत्वात्सर्वचिन्तां करिष्यसि । भविष्यति तदा भव्यं, मा कार्षीः खेदमात्मनः ॥ १८ ॥
तदा प्राणप्रियोप्याह, प्रिये खेदः कथं नहि ? । निर्धना नरनार्यौ हि शवस्य सदृशी (शी) मताः ॥१९॥

यतः—यस्यार्थास्तस्य मित्राणि, यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके, यस्यार्थास्तस्य जीवितम् ॥ ६२० ॥

गाथा—जाई विज्जा रूवं, तिन्निवि निवडन्तु कन्दरे विवरे । अत्थुच्चिय परिवड्ढउ, जेण गुणा पायडा हुन्ति २१

पत्नी प्रोवाच वक्ष्येऽहमुपाय ते धनार्जने । तावच्च स्वस्थचित्तेन, प्रथमं भोजन कुरु ॥ २२ ॥
स्नात्वा देवार्चन कृत्वा, कृत्वा च भोजन तत । चिन्तित तेन भार्या किं, निधान दर्शयिष्यति ? ॥२३॥
क्षण विश्रम्य सा पृष्टोपाय क कथ्यता प्रिये ।। तयोक्त लक्षमूल्यानि, सन्त्यङ्गाभरणानि मे ॥ २४ ॥
तेषा मध्यात्पञ्चशतदीनारमूल्यकुण्डलम् । विक्रीय तेन द्रव्येण, व्यवसाय कुरु प्रिय ? ॥ २५ ॥
ततोऽसौ तेन वित्तेन, व्यवसाय व्यचिन्तयत् । पूर्वं कोटीश्वरस्तेन, चित्ते नायाति तद्गतम् ॥ २६ ॥
ततोऽवादीत्प्रिये ? पूर्वमहं कोटीश्वरोऽभवम् । अत्राल्पव्यवसायाश्च, कुर्वन् लज्जामि साम्प्रतम् ॥ २७॥
तेनाह यानपात्रेण, किञ्चिल्लात्वा पयोनिधौ । कस्मिन् द्वीपे गमिष्यामि, नो द्रव्यं नीरधिं विना ॥ २८॥
यत –इक्षुक्षेत्र समुद्राश्च, जात्यपाषाण एवच । प्रसादो भूभृता चैव, क्षणाद् घ्नन्ति दरिद्रताम् ॥ २९॥
अथोक्त प्रियया तस्य, किं समुद्रेण साम्प्रतम् ? । सर्वथा सर्वकार्येषु, भाग्यमेव प्रशस्यते ॥ ६३० ॥

काव्ये–

पुण्यादेव समीहितार्थघटना नो पौरुषात्प्राणिनाम् , यद्भानोर्भ्रमतोपि नाम्बरपथे स्यादष्टम· सैन्धव·।

स्वस्थानात्पदमात्रमप्यचलतो वन्ध्यस्य चानेकशो, जायन्ते मधुपालिपालितयशःश्रीलम्भिनः कुम्भिनः ॥ ३१ ॥

केषाञ्चिन्निजवेश्मनि स्थितवतामालस्यवश्यात्मनां,दृश्यंते फलिता लता इव मुल(सदा मुक्ताव)चूलश्रियः अब्धिं लङ्घयतां खनिञ्च खनतां क्षोणीतलं प्रेक्ष (पश्य)तामन्येषां व्यवसायसाहसवतां तन्नास्ति यद्भुज्यते ॥ ३२ ॥

यद्भविष्याधिको धीरैः, व्यवसायः प्रकीर्त्यते । तस्मादप्यधिको लोके, भाग्यवान् राजिलो यथा ॥३३॥
स्यातां गान्धर्वनगरे, वणिजौ रत्नराजिलौ । अहर्निशं तौ निष्कार्यौ, विवदेते मदोद्धुरौ ॥ ३४ ॥
मन्यते व्यवसायस्य, साफल्यं रत्नसंज्ञितः । राजिलो दीर्घदृक्कामं, भाग्यमेव प्रशंसति ॥ ३५ ॥
निषेध्यमानो लोकेन, हठात्तौ न विरेमतुः । तावद्विदितवृत्तेन, पपृच्छाते महीभुजा ॥ ३६ ॥
कुतो रे निष्फलं वादं, कुर्वीयाथामसौख्यदम् । यद्यस्य मनसा भाति, तन्निन्द्यमपि सुन्दरम् ॥ ३७ ॥
स्वान्ययोः क्वापि सौख्याय, विपरीताः कृताः क्रियाः । यथा स्याद् व्यासविश्रान्तिः, पूगक्रतुनतिर्यथा३८

यज्ज्येष्ठा वान्धवा सप्त, वभूवुः खण्डमण्डना । भाग्यात्त्वमेव राजाभूर्नेद(नाह) किं? राजिलोऽब्रवीत्३९

शत्रुपीडादिक चेत्त्व, व्यवसाय करोषि न । तत्ते कुतो राज्यवृद्धिर्द्वितीयोप्यगदन्नृपम ? ॥ ६४० ॥

अथवा स्थालनिक्षिप्तैर्नैवेद्यै मनस प्रिये । कवलव्यवसायात्तु, विना तृप्तिर्न जायते ॥ ४१ ॥

ततो हास्यरुषाक्रान्तो, नरेन्द्रो निजपूरुषै । निर्नीरकूपे चिक्षेप, तावुभौ मानदुर्द्धरौ ॥ ४२ ॥

सुष्वाप राजिल इव, राजिल कूपमध्यग । अभितस्तत्र वभ्राम, रत्नोऽपि व्यवसायवान् ॥ ४३ ॥

मध्यन्दिने नृपोऽप्रैषीत्, सदयो मोदकाष्टकम् । ते जाग्रता जगृहिरे, रत्नेनावटवर्त्तिना ॥ ४४ ॥

प्रवोध्य तत्र रत्नोपि, राजिलञ्च वितर्कयन् । तेपामर्ध दयापूर्व, ददौ मुदितमानस ॥ ४५ ॥

अपराह्णे समाकृष्टौ, कूपाद्भूपेन जल्पितौ । प्रौढ प्राशंस भाग्याय, राजिलो रङ्गसङ्गत ॥ ४६ ॥

देवाऽस्य भ्रमतोऽभूवन्, यावन्तो मोदका श्रमात् । प्रसुप्तेनापि तावन्तो, लेभिरे हेलया मया ॥ ४७ ॥

रत्नोऽब्रवीत्कृपापूर्व, त्वं विनिद्रो मया कृत । रे रे तुभ्य मति दत्वा, भाग्येनाह प्रवोधित ॥ ४८ ॥

भूपोऽपि मोदकन्यस्तामयाचन्मुद्रिकान्तयो. । समर्थौ राजिल. शीघ्रमार्प्पयत्ता स्मितानन ॥ ४९ ॥

इति प्रत्यक्षदृष्टान्ताद्, बोधितौ तौ महीभुजा। मेनाते भाग्यसाफल्यं, तेनाते पुण्यमद्भुतम् ॥ ६५० ॥

इति राजिलकथा।

पुनः कान्ता पतिं प्राह, यदि पुण्योदयो भवेत्। उपक्रमं विना तर्हि, सर्वं संपद्यते गृहे ॥ ५१ ॥
यतः—उद्यमं कुर्वतां पुंसां, फलं भाग्यानुसारतः। समुद्रमथनाल्लेभे, हरिर्लक्ष्मीं हरो विषम् ॥५२॥
यत्स्वल्पं न्यायधर्मेण, प्राप्यते तद्घनं भवेत्। धनं त्वन्यायमार्गेण, तद्वित्तमचिराद्व्रजेत् ॥ ५३ ॥
अन्यायोपार्जितं वित्तं, क्षणं नैवावतिष्ठति। अत्रोदाहरणं श्रेष्ठी, काशीवासी धनावहः ॥ ५४ ॥
तथाहि—पुर्यां वाणारसीनाम्न्यां, कुशलः सर्वकर्मसु। धनाढ्यो घृतकश्रेष्ठी, वसति स्म धनावहः ॥५५॥
अन्येद्युर्ग्रामनारीभिः, प्राज्यमाज्यं धनावहः। अङ्करेखाविपर्यासात्, सपादं जगृहे शतः (शतम्)॥ ५६ ॥
स दध्यौ चेतसि परमन्यायद्रविणं भृशम्। न तिष्ठति तदेतद्द्राग्, व्ययिष्ये वल्भनादिषु ॥ ५७ ॥
गोधूमघृतखण्डाद्यमर्पयित्वा वधूं प्रति। प्रोक्तं स्वजननीपार्श्वात्, घृतपूराणि कारय ॥ ५८ ॥
सा वक्त्रनिपतल्लालं, घृतपूराणि दर्पिता। यावच्चकार मध्याह्ने, तावदागात्सुतापतिः ॥ ५९ ॥

सहायसहित सापि, वहुमान सगौरवम् । भोजयामास सा राद्धैर्घृतपूरे पुराकृतै ॥ ६६० ॥ युग्मम् ।
उक्तञ्च–तिया तिन्नि उ वल्लह, कलिकज्जलसिन्दूर । अन्नवि तिन्निवि वल्लहा दूधजमाईतूर ॥ ६१ ॥
भुक्त्वा तस्मिन् गते ग्राम, हट्टात् श्रेष्ठी समागत । स्नानस्य देवतार्चाया, मनोरथमथाकरोत् ॥६२॥
सा भ्रम घृतपूराणा, रक्षन्ती प्रियमालपत् । मध्यन्दिनमतिक्रान्त, मङ्क्षु भुङ्क्ष्व बुभुक्षित ॥ ६३ ॥
विवेकेनाद्य भोक्तव्यमिति विस्तरकारणम् । घृतपूरभ्रमधर, वारयामास सा न तम् ॥ ६४ ॥
सपूर्णकृत्य सापत्त्य, विशालस्थालधारिणम् । सस्पृह घृतपूरार्थे, निषण्ण वीक्ष्य साहसत् ॥ ६५ ॥
अन्नमप्यर्धपक्वञ्च, करवाणि कथ प्रिये ? । स्वादूनि घृतपूराणि, जगासे दुहिता पतिः ॥ ६६ ॥
इति तद्वचनाज्जातास्तोकशोक स कोपनः । पतन्तु दन्ता जामातुरष्टवर्षीयवालवत् ॥ ६७ ॥
वज्र पततु तन्मूर्ध्नि, यथा गिरिवरे पुरा । विद्युत्पततु तन्मुण्डे, कास्यपात्र इवाद्भुता ॥ ६८ ॥
सदा रुष्टः सदा क्रूर , सदा पूजा प्रयच्छति । कन्याराशिस्थितो नित्य, जामाता दशमो ग्रह ॥ ६९ ॥
इति यावद्विमृशति, तावत्सा घृतदायिनी । गाढशब्द च नर्दन्ती, शाकिनीवाऽऽगमद्गृहे ॥ ६७० ॥

रे रे विश्वस्तवधक, मायाविन् जनवञ्चक । पश्यतोहर वेगेन, चल त्वं राजमन्दिरे ॥ ७१ ॥
मामकीनं कुतोऽग्राहीः, प्रमाणादधिकं घृतम् । इत्यर्धभुक्ते स तया, धृतो वाहौ मनस्यधात् ॥ ७२ ॥
अन्यायोपार्जितं वित्तं, नयास्पदमलं त्विदम् । निपत्य पादयोस्तस्याः, स घृतद्रविणं ददौ ॥ ७३ ॥

इति अन्यायवित्तकथा ।

अतो न्यायेन योत्पत्तिर्वित्तस्याल्पाथवा घना । शतधा लक्षधा सा च, भाग्येन भवति प्रिय ! ॥ ७४ ॥
अथोचे धर्मदत्तोपि, त्वं सत्यं वदसि प्रिये ! । तथाप्यभाग्यभाग्ये हि, न ज्ञायेते विनोद्यमम् ॥ ७५ ॥
श्लोकः—उद्यमं साहसं धैर्यं, बलं बुद्धिः पराक्रमः । षडेते यस्य विद्यन्ते तस्य देवोऽपि शङ्कते ॥ ७६ ॥
गाथा—अत्थो जसो अ कित्ती, विज्जा विन्नाणयं पुरसकारो । पाण्णं पाविज्जई, पुरसेहिं अन्नदेसंमि ॥७७॥
उद्यमं परमं मित्रमालस्यं परमो रिपुः । आलस्यं सर्वथा जित्वा, सर्वकार्यक्षमो भव ॥ ७८ ॥
अतो रत्नाकरस्यैकवारं सेवां करोम्यहम् । स प्रियानुमतिं प्राप्य, यानपात्रमसज्जयत् ॥ ७९ ॥
आपृच्छ्य स्वजनान् सर्वान्, पोतमारुह्य सद्दिने । कर्कोटद्वीपमुद्दिश्य, प्रतस्थे तद्दिशं प्रति ॥ ६८० ॥

अन्येद्युर्गच्छतस्तस्य, प्रतिकूलेन वायुना । अकस्मात् पापकर्मत्वात्, भग्न॰ पोतः क्षणेन स॰ ॥ ८१ ॥
धर्मदत्तकरे किञ्चित्फलकञ्चटित तदा । तदिष्टजनवत्तेन, दोर्भ्यामालिङ्गितं दृढम् ॥ ८२ ॥
तरन्नीर प्रियाशिक्षा, स्मरस्तीरमवाप स॰ । रौरव तटमम्भोधे॰, पश्यन्नेव बभाण च ॥ ८३॥
यत —स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्य , कल्याणिनी भवतु मौक्तिकशुक्तिमाला ।
प्राप्त फल सकलमप्यमुत पयोधेर्यद्दारुणैर्जलचरैर्न विदारितोऽहम् ॥ ८४ ॥
एतस्मादमृत सुरै॰ शतमखेनोच्चै श्रवा सप्रणम् (वा उल्वण ) । कृष्णेनाद्भुतविक्रमेण वसतिर्लक्ष्मी॰ समासादिता ॥ ८५ ॥
इत्युक्त्वा सोऽग्रतो गच्छन्, वणश्रेणीं विलोकयन् । ददर्शैक पयःपूर्ण, तटाक चन्द्रविम्ववत् ॥ ८६ ॥
मिष्ट नीर पपौ तीरे, तरुच्छाया समाश्रित । दुखत उद्विग्नश्चिन्ता, विविधाश्चाकरोदसौ ॥ ८७ ॥
तदा निद्राकुलत्वेन, स सुप्त पर्णस्रस्तरे । यावन्निद्रा समायाता, तावत्केनाप्यसौ हृतः ॥ ८८ ॥
स वृद्ध प्रौढदेहश्च, हर्तारं त भयावहम् । राक्षस वीक्ष्य नेत्रे द्वे, निमील्यैवमचिन्तयत् ॥ ८९ ॥

काव्यम्—छित्वा पाशमपास्य कूटरचनां भङ्क्त्वा लसद्वागुरां । पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात् ॥९०॥
व्याधानां शरगोचराण्यतिजवेनोल्लङ्घ्य वेगान्मृगः, कूपान्तः पतितः करोतु विधुरे किंवा विधौ पौरुषम् ? ॥ ९१ ॥
यदुपतेर्जगदेकमहीभुजो, रिपुसमूहनृपौकहविर्भुजः । मरणमस्य वने शरसंभवं, विधिरहो बलवानिति मे मतिः ॥ ९२ ॥
पुराऽहं पतितः कूटसङ्कटे द्यूतवेश्ययोः । ततो निःस्वश्च वैदग्ध्यान्नटितः सागरे बलात् ॥ ९३ ॥
भग्ने पोतेऽम्बुधेः पाताज्झटिति निर्गतस्ततः । अधुना राक्षसे कष्टे, पतितः किं करोम्यहम् ? ॥ ९४ ॥
यद्भाव्यं तद्भवत्वेवं, धीरत्वं स दधौ हृदि । कस्मिन् स्थानेऽथ मुक्त्वा तं, जगाम क्वापि राक्षसः ॥९५॥
विज्ञाय मुक्तमात्मानं, यावदुद्घाट्य चक्षुषी । यावन्न राक्षसो दृष्टो, दृष्टैका तत्र बालिका ॥ ९६ ॥
वृक्षच्छायाश्रिता दिव्यरूपसौभाग्यशालिनीम् । वरवस्त्रादिशृङ्गारामेना दृष्ट्वा स विस्मितः ॥ ९७ ॥

दध्यौ च राक्षस कागदेषा स्त्री किमु राक्षसी । कन्यारूपोऽथवा जात , पलादश्चित्रहेतवे ॥ ९८ ॥
किवेयं खेचरी नारी, सुरी वा व्यन्तरी किमु । नागलोकोद्भवा किं वा, किवाऽसौ कापि मानवी? ॥ ९९ ॥
साहस हृदि धृत्वाऽथ, निर्विकल्पेन चेतसा । धर्म्मदत्तेन सा वाला, पृष्टा त्व काऽसि सुन्दरि ? ॥७००॥
तया पृष्ट स कोऽसि त्व, मानवोऽह नरोऽवदत् । तयोक्त मानवी चाह, कुमार पुनरब्रवीत् ॥ १ ॥
कुतोऽत्र विपमेऽरण्ये, तिष्ठस्येकाकिनी किमु ? । साऽवादीद्दैवयोगान्मे, विद्यते विपमा गति· ॥ २ ॥
कुमार प्राह हे भद्रे ! कथं ते विपमा गति । साऽवोचत्श्रूयता मित्र, ! कथा मे चित्रकारिणी ॥ ३ ॥
वार्ध्यर्धे सिहलद्वीपेऽस्ति पुर कमलाभिधम् । तत्र सत्यार्थनामासीद्घनसारो वणिग्वर· ॥ ४ ॥
धनश्रीति प्रिया तस्य, कृष्णस्य कमला यथा । रूपलावण्यसपूर्णा, नारीजनशिरोमणि ॥ ५ ॥
यत —अनुकूला न वाग्दुष्टा, दक्षा साध्वी त्रपावनी । एभिरेव गुणैर्युक्ता, सा स्त्री लक्ष्मीर्न सशय ॥ ६ ॥
तत्कुक्षिसभवा पुत्री, पवित्रीकृतमानसा । अह धनवती जाता, प्राणेभ्योऽप्यतिवल्लभा ॥ ७ ॥
सा शिक्षितसर्वकला, क्रमात्सप्राप्तयौवना । पित्रा दृष्टा चिन्तितश्च, वरयोग्याभवत्सुता ॥ ८ ॥

गाहा–जायाइ हवइ सोगो, वड्ढन्तीए य वड्ढए चिन्ता । परिणीयाए दण्डो, सुयासमा वेयणा नत्थि॥९॥
यतः–प्रार्थना न कृता येन, जाता यस्य न कन्यका । स्वाधीना यस्य वृत्तिश्च, सुखं जीवन्ति ते त्रयः७१०
तदा मे जनकेनैवं, भूयोऽपि हृदि चिन्तितम् । भाग्यवान् यो गुणैर्युक्तस्तस्यैषा दीयते सुता ॥ ११ ॥
जातिरूपवयोविद्या,आरोग्यं बहुपक्षता । उद्यमो वृत्तयुक्तत्वमष्टावेते वरे गुणाः ॥ १२ ॥
यतः–मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् । त्रिगुणाधिकवर्षाणामपि देया न कन्यका ॥ १३ ॥

काव्यम्–न्यायोपात्तधनाधिपो विनयवान् धीमान् कुलीनाग्रणी,
रूपैर्न्यक्कृतमन्मथो बलिरिव त्यागेन भोगप्रियः ।
शिष्टाचारविचारकौशलकलापाण्डित्यधर्मप्रियः,
प्रीत्याभाषणसंमदामृतमयः प्राणेश्वरो दुर्लभः ॥ १४ ॥

वरार्थेऽथ महेभ्यानां, बहूनामङ्गजन्मनाम् । वीक्षिता जन्मपत्र्योऽपि, सदृशः कोऽपि नाऽमिलत् ॥ १५॥
तातेनाचिन्ति किं कुर्वे, जन्मपत्र्यादियोगतः । आलोक्यालोक्य भग्नोऽहं, मत्सुतासदृशं वरम् ॥ १६ ॥

अथ चन्द्रपुरात्कोऽपि, ज्योतिःशास्त्रविशारद । शृण्वन्त्या मयि तातस्त, जगाद गणक प्रति ॥१७॥
वृद्धा जाता सुतैषा मे, कानुरुपो वरो नहि । ज्योतिर्वित्! त्व जगद्ज्ञाता, सुतातुल्य वर वद ॥ १८॥
जन्मपत्र्यनुमानेन, ग्रहमेलापक शुभम्। दृष्ट्वाऽथ वाडव प्रोचे, शृणु त्व श्रेष्ठीसत्तम ! ॥ १९ ॥
इभ्यश्चन्द्रपुरे जात , श्रीपति श्रीमतीप्रिय । धर्म्मदत्तोऽस्ति तत्सूनु , सुकृती सुभगाग्रणी ॥ ७२० ॥
तदा हृष्टात्मना श्रेष्ठी, पुन॰ पप्रच्छ तद्गुणान् । विप्र प्रोचे मया नैव, दृष्टस्तत्सदृशो भुवि ॥ २१ ॥
विद्यावयोयशोभाग्यकृतज्ञत्वादितद्गुणा । षोडशस्वर्णकोटीना, भोक्ता यो वेश्यया सह ॥ २२ ॥
विप्रवाक्यं निशम्यैव, स श्रेष्ठी पुनरब्रवीत्। मत्पुत्रीं धर्मदत्ताय, दास्याम्यन्यत्र न कचित् ॥ २३ ॥
लग्न पश्य महाशुद्ध, शुभयोगसमन्वितम्। विप्रोऽवादीत्पञ्चदशदिनान्ते लग्नमुत्तमम् ॥ २४ ॥
अस्मिन्वर्षे पर लग्न, नास्त्येवोत्तममीदृशम् । श्रेष्ठी प्रोचे दिनै स्तोकै , कथं स्याता गमागमौ ? ॥२५॥
कर्तु विवाहकार्याणि, शक्यते नैव विस्तरात् । सुतामादाय तत्राह, ततो यामि कुटुम्बयुक् ॥ २६ ॥
विप्र सन्तोष्य दानेन, सज्जीभूत स श्रेष्ठीराट्। आरुरोह महापोत, सकुटुम्बसुतायुत ॥ २७ ॥

दुर्दैवप्रेरितो वातः, प्रतिकूलस्तदाऽभवत् । भग्नं प्रवहणं तेन, सर्वमब्धौ ममज्ज च ॥ २८ ॥
भग्ने पोते धनवती, फलकग्रहणात्तदा । तरन्ती सलिलं तीरं, प्राप्ता सप्तदिनैः क्रमात् ॥ २९ ॥
स्वस्थीभूता वने क्वापि, पयः पीत्वा सरोवरे । सुप्ताहं राक्षसेनाथोत्पाट्य मुक्ताऽत्र भूतले ॥ ७३० ॥
ततो रक्षोभयाद्भीतां, कम्पमानां च वीक्ष्य माम् । राक्षसः प्राह मा भैषीस्तव किञ्चिन्न कथ्यते ॥ ३१ ॥
मम क्षुधाकुलस्यापि, त्वां दृष्ट्वा करुणाभवत् । यावद्भक्ष्यञ्च लप्स्येऽन्यत्तावत्वां भक्षयामि न ॥ ३२ ॥
इत्युक्त्वा क्वापि गत्वा च, त्वमानीतोऽधुनाऽमुना । विशेषात्तदहं जाता, दुःखिनी तव दुःखतः ॥ ३३ ॥
भवन्तं वीक्ष्य हे साधो ! चिन्ता मे बाधतेऽधिकम् । ईदृशं नररत्नं हि, भक्षयिष्यति राक्षसः ॥ ३४ ॥
दैवेनाहं कथं सृष्टा, पापिनी भाग्यवर्जिता । मत्कृते यत्कुटुम्बस्य समकालमभून्मृतिः ॥ ३५ ॥
विदेशे पतिताऽहं च, विवाहोऽपि मम स्थितः । मद्दृष्टौ राक्षसाद्दुष्टाद्विनाशस्ते भविष्यति ॥ ३६ ॥
तस्माज्जानामि चित्तेऽहमात्मघातं करोम्यथ । वरं दुःखमदृष्ट्वेव, साध्यते मरणं हि यत् ॥ ३७ ॥
अथवा भद्र कोऽसि त्वं, कस्मात् स्थानादिहागतः? । स्वरूपं वद सत्यं स्वं, श्रुत्वा यन्मे सुखं भवेत्॥३८॥

इत्युक्ते धर्मदत्तोऽपि, स्मित्वाऽवादीद्वरानने ! । मम स्थानादिक सर्व, त्वयैवोक्त समासत ॥ ३९ ॥
स्वरूप सकल तस्या, धर्मदत्तेन भाषितम् । अथ तस्या भुजो वाम , स्फुरित प्रीतिहेतवे ॥७४० ॥
अङ्गस्य चेष्टया ज्ञात, तयाऽसौ धर्मदत्तक । हृदीति निश्चय कृत्वा, दध्यौ लज्जाभर च सा ॥ ४१ ॥
प्रीत्या वाच तदोवाच, कुमार प्रति कन्यका । सानुकूलेन दैवेन, चक्रे सङ्गम आवयो ॥ ४२ ॥
अहो क्व क्वावयो स्थाने, दूरे भूमिरिय क्व च ? । पर पुण्याद्भवेन्नृणामसंभाव्यमपि ध्रुवम् ॥ ४३ ॥
कुमार प्राह जानासि, लग्नस्य दिवस कदा ? । दिनानि गणयित्वा सा, प्रोचेऽद्यैव स वासर· ॥४४॥
ततो वनस्थसामग्र्या, लग्नवेला च साधिता । परिणीताऽवदन्नारी, राक्षसात्ते भयं प्रिय ! ॥ ४५ ॥
स प्रोचे तस्य घाताय, कोऽप्युपायोऽस्ति हे प्रिये! । नार्या प्रोक्त तटाके प्राग्, गत्वा स्नान करोति स ॥४६॥
पश्चादत्र समागत्य, देवार्चा कुरुते यदा । तदा स दैवत खड्ग, पार्श्वे मुञ्चति हस्तत ॥ ४७ ॥
प्रियोऽवादीत्करिष्येऽस्य, शिरश्छेद ततोऽसिना । प्रियोचे राक्षसोऽभ्येति, तावदन्यत्र गम्यताम् ॥४८॥
एव कृतेऽथ तत्रागात्, राक्षसोऽसौ मदोद्धत· । रे भक्ष्य क्व गतं चैवमुक्त्वोपविष्ट आशु स ॥ ४९ ॥

देवतार्च्चनवेलायां, प्रस्तावं प्राप्य सत्त्ववान् । स्थित्वा रक्षसपृष्ठौ द्राक्, कुमारः खड्गमग्रहीत् ॥ ७५० ॥
गृहीत्वासि दृढं मुष्टौ, भूत्वाऽग्रे हक्कितः सुरः । रे राक्षस ! दुराचार, रुष्टो दैवस्तवाधुना ॥ ५१ ॥
श्रुत्वैवं यावदुत्तस्थौ, स कोपाकुललोचनः । तावत् द्राग् धर्म्मदत्तेन, हतश्च हस्तलाघवात् ॥ ५२ ॥
ततो धनवती तस्य, भुजं पुष्पैरपूजयत् । स्वपतेः कुशलं वीक्ष्य, प्रमोदश्च दधौ हृदि ॥ ५३ ॥
तौ निःशङ्कौ वने तत्र, द्राक्षाम्रकदलीफलैः । कृताहारौ सुखेनैव, युग्मिवत्संस्थितौ तदा ॥ ५४ ॥
राज्यतुल्यं वनमपि, स्वेच्छादिकसुखे भवेत् । विरहाद्यसुखे राज्यं, दुस्सहं काननादपि ॥ ५५ ॥
तथा मिथः कथागाथाकाव्यप्रहेलिकादिभिः । कुर्वन्तौ कौतुकं कालं, तावगमयतां मुदा ॥ ५६ ॥

धर्मदत्त उवाच—

अपूर्वोऽयं मया दृष्टः, कान्ते कमललोचने ! ।
मध्ये शोर्यदि जानासि, तदाऽहं तव सेवकः ॥ ५७ ॥

क्षणं विमृश्य नार्यूचे, हुं ज्ञातं स्वामिनोदितम् । पतिरूचे कथं ? साऽऽह, अशोक इति कथ्यते ॥५८॥

पत्नी प्रोचे मया प्रोक्त, नाथ ! प्रश्नोत्तर द्रुतम् । चेत्त्व जानासि तन्नून, तवाह पदरेणुका ॥ ५९ ॥
कथ सबोध्यते राजा, सुग्रीवस्य च का प्रिया। दरिद्रिण· किमिच्छन्ति, किङ्कुर्वन्ति तपोधना ? ॥७६०॥
विमृश्याथ पति प्रोचे, प्रिये ! ज्ञात तवोदितम् । देवताऽऽराधन ह्येतत्, कर्तव्य विबुधै सदा ॥ ६१ ॥
इत्थ विनोदतोऽत्यन्त, गत काल· कियानपि । अन्यदा वल्लभा प्रोचे, पति प्रति सुधर्म्मिणी ॥ ६२ ॥
नाथात्र मृगवत् स्वीय, यात्यायुर्धर्मवर्जितम् । आवयोर्वा वृथोत्पत्तिररण्ये मालती यथा ॥ ६३ ॥

श्लोक —न देवपूजा न च पात्रपूजा, न श्राद्धर्मश्च न साधुधर्म्म· ।
लब्ध्वाऽपि मानुष्यमिद समस्त, कृत मयाऽरण्यविलापतुल्यम् ॥ ६४ ॥

मानुष भवमवाप्य दक्षिणावर्त्तशङ्खवदमुभवाम्बुधौ। पूरयेत्सुकृतगङ्गवारिणा, पापवृत्तिसुरया न चोत्तम ६५

काव्यम्—पूजामाचरता जगत्त्रयपते सद्ध्यार्चना कुर्वता,
तीर्थानामभिवन्दन विदधता जैन वच शृण्वता ।
सद्दान ददता तपश्च चरतां सत्त्वानुकपाकृताम्,

येषां यान्ति दिनानि जन्म सफलं तेषां सुपुण्यात्मनाम् ॥ ६६ ॥

न येषां धर्मार्थं भवति धनलाभःकिल नृणां, न ये दुःखार्त्तेषु प्रकृतिकरुणाऽव्याकुलधियः ।
न वा यैरात्मार्थः सुचरितविधानैर्विरचितो, न तेषां जन्मेदं जननशतलाभोऽपि विफलः ॥६७॥

काव्यम्—प्रत्यूषे प्रतिमा जिनस्य कलशः पूर्णो जलैरुज्ज्वलैः,
पुष्पस्रक्परिधाप्रदीपकलिकानैवेद्यआरात्रिकैः ।
भद्रं स्वस्ति नमो नमो जयजयेत्युच्चैर्वचांसि स्थिते,
रित्येते शकुना भवन्ति भविनां गेहे वसन्त्याः श्रियः ॥ ६८ ॥

यतः—मानुषत्वेऽपि संप्राप्ते, केचिन्निष्फलजन्मकाः दीपोत्सवे कृता द्वारि, च्छगणस्येव पुत्रकाः ॥६९॥
न देवायतनं किञ्चिन्न चात्र मुनिदर्शनम्। सज्जनस्य च योगो नानार्थवर्जीव्यतेऽधुना ॥ ७७० ॥

गाथा—जत्थ न दीसन्ति जिणा, नय भवणं नेव सङ्घमुहकमलं ।
नय सुब्बइ जिणवयणं, किन्ताए अत्थभूमीए ? ॥ ७१ ॥

काव्यम्–तत्र धाम्नि निवसेद् गृहमेधी, सपतन्ति खलु यत्र मुनीन्द्राः ।

यत्र चैत्यगृहमस्ति जिनाना, श्रावका परिवसन्ति च यत्र ॥ ७२ ॥

ततस्तो दम्पती तस्मात्स्थानकाच्चेलतु शनै । वासभूमौ च सप्राप्तौ, ग्रामाणि नगराण्यपि ॥ ७३ ॥

क्रमाच्चन्द्रपुरासन्ने, देशमध्ये च तौ गतौ । वनमध्येऽन्यदा साय, श्रान्तौ सुप्तौ च निर्भयो ॥ ७४ ॥

धर्मदत्तो जजागार, पाश्चात्यनिशि सोद्यम । स्मृत्वा पञ्चनमस्कारं, धर्मध्यान तथाऽकरोत् ॥ ७५ ॥

अथ सूर्योदयात्पूर्वं, प्रियाजागरणाय स. । बभाषे हर्षमाश्रित्य, सूक्तमेव महार्थकम् ॥ ७६ ॥

काव्यम्–प्रोज्जृम्भते परिमल कमलावलीना, शब्दायते क्षितिरुहोपरि ताम्रचूडः ।

भृङ्ग पवित्रयति मेरुगिरेर्विवस्वानुत्थीयता सुनयने । रजनी जगाम ॥ ७७ ॥

प्रोक्ते सूक्तेऽपि सा पत्नी, तदा दत्ते स्म नोत्तरम् । क्षणमेक प्रतीक्षित्वा, प्रबोधायाऽपठत्पुन ॥ ७८ ॥

एते व्रजन्ति हरिणास्तृणभक्षणाय, चूर्णिं विधातुमथ यान्ति हि पक्षिणोऽपि ।

मार्गस्तथाऽपि सुवह किल शीतल. स्यादुत्थीयता प्रियतमे । रजनी जगाम ॥ ७९ ॥

यावत्सा नोत्तरं दत्ते, धर्मदत्तेन तावता । निरीक्षितं मुखं तस्या, दृष्टं किञ्चिन्न संस्तरे ॥ ७८० ॥
चिन्तितं देहचिन्तायै, नूनं पूर्वोत्थिता गता । क्षणमात्रं पुनः स्थित्वा, शब्दमुच्चैश्चकार सः ॥ ८१ ॥
आगच्छागच्छ हे कान्ते ! वेगेन पथि गम्यते । न कोऽप्यागात्तदोत्थाय, सोऽपश्यत्सर्वतः पदान् ॥८२॥
पदं न दृश्यते लग्नं, ततोऽसौ विविधार्त्तितः।भ्रान्त्वा भ्रान्त्वा वने श्रान्तः, क्वापि लब्धा न सा परम्॥८३॥
ततश्चित्तभ्रमो जातः, सोऽजल्पन्मुक्तचेतनः । हे हंसकेकिसारङ्गाः ! सारङ्गाक्षी प्रिया क्व मे?॥ ८४ ॥
चम्पकाशोकनिम्बाम्रशालिपिप्पलपादपाः । गच्छन्ती मे प्रिया दृष्टा, शुद्धिं कथयत द्रुतम् ॥ ८५ ॥
इति जल्पन् पुनर्भ्रान्त्वा, सोऽगमत् शयनस्थितौ । एवं ग्रथिलवद्याति, प्रत्यायाति वदन्निति ॥ ८६ ॥
यतः—किङ्करोमि क्व गच्छामि ! रामो नास्ति महीतले । प्रियाविरहजं दुःखं, नान्यो जानाति मानवः ॥८७॥
गाथा—ए संसार असारडउ, आशावन्धणि जाइ । अनेरडइ करि सूईयइ, अनेरडइ विहाइ ॥ ८८ ॥

यतः—यन्मनोरथशतैरगोचरो, यत्स्पृशन्ति न गिरः कवेरपि ।
स्वप्नवृत्तिरपि यत्र दुर्लभा, लीलयैव विदधाति तद्विधिः ॥ ८९ ॥

यत —बुधजने विहिता च दरिद्रता, बत कृता च जरा वनिताजने ।

हतधवा सुनवा च कुलाङ्गना, विधिरहो बलवानिति मे मति ॥ ७९० ॥

इत्यादि प्रलपन्नेप, स्वगृह प्रति निर्ययौ । ततश्चन्द्रपुर प्राप्य प्रवेशेऽचिन्तयत्पुन ॥ ९१ ॥
हा मूढ ! धर्मदत्त त्व, अनात्मज्ञ ! क्व यासि रे । निर्द्रव्यो भग्नपोतोऽह, कथ यामि निजे गृहे ? ॥९२॥
स्वजनानामभाग्योऽह, दर्शयामि कथ मुखम् ? । दुर्जना सधना सर्वे, हसिष्यन्ति मुहुर्मुहु ॥ ९३ ॥

यत —वर वन व्याघ्रभुजङ्गसेवित, द्रुमालये पुष्पफलाम्बुभोजनम् ।

भिक्षाशन वा विषभक्षण वर, न बन्धुमध्ये धनहीनजीवितम् ॥ ९४ ॥

यत —कपिकुलनखमुखविदलिततरुतलपतितानि भोजन प्रवरम् ।

न पुनर्धनमदगर्वितभ्रूभङ्गविकारिणी दृष्टि ॥ ९५ ॥

विचिन्त्यैवमसौ पश्चाद्वलितोऽगाद्वनान्तरे । तत्र वारिफलाहार, कुर्वंस्तस्थौ मृगेन्द्रवत् ॥ ९६ ॥
भ्रमन्नन्येद्युरेकेन, दृष्ट पृष्टश्च योगिना । दृश्यसेऽहो सचिन्तस्त्व, चिन्ता ते वद मेऽग्रत ॥ ९७ ॥

धर्मदत्तोऽब्रवीद्देव ! निर्धनत्वे कुतः सुखम् ? । कथं भवामि निश्चिन्तो, यदि दारिद्र्यपीडितः ॥ ९८ ॥
कपाली प्राह रे मां किं, न वेत्सि ? त्वमियद्दिनैः । दारिद्रकन्दकुद्दाल, इति मे विरुदं स्फुटम् ॥९९॥
गाहा—मयणदेव ईसर दहिउ, लङ्क दही हणुमण । पाण्डुउवन अरजुन दहिउ, पुण दालिद्द न केण८००
दारिद्रदहनो नाम, मदीयं वर्त्तते भुवि । श्रुत्वा तद्धर्मदत्तोऽपि, हृष्टस्तं प्रणनाम च ॥ १ ॥
पृष्ठे दत्वा करं योगी, प्रोचे चिन्तां विमुञ्च भोः! । लक्ष्मीं तव गृहे दासीं, करोमि स्वल्पकालतः ॥२॥
अथोचे धर्मदत्तोऽपि, केनोपायेन हे विभो! । करिष्यसि द्रुतं दासीं, कमलां ? कथ्यतां मम ॥ ३ ॥
योग्यूचे साधयिष्यामि, सद्दिने स्वर्णपौरुषम् । चिन्तितं धर्मदत्तेन, कार्या रक्षाऽऽत्मनो मया ॥ ४ ॥
मामेव स्वर्णपुरुषं, मन्ये योगी करिष्यति । निःशूका योगिनः सर्वे, किलेदं श्रूयते पुरा ॥ ५ ॥
विचिन्त्येति स तं प्रोचे, त्वं योगिन् ! जीवघाततः । करिष्यसि नरं हैमं, कार्यं तन्नास्ति तेन मे ॥६॥
योग्यवादीदरे हाहा, जीवघातं करोति कः? । ईदृशो नाथमार्गो यद्रक्ष्यन्ते सर्वजन्तवः ॥ ७ ॥
यतः—तत् श्रुतं यातु पातालं, तच्चातुर्यं विलीयताम् । ते विशन्तु गुणा वह्नौ, यत्र जीवदया नहि ॥ ८ ॥

अघदवौघघनाघनमण्डली, सुकृतसन्ततिकल्पलतावनी । विशदधर्मजनन्यमृत स्फुरद्, गुणगणे करुणा जयताच्चिरम् ॥ ९ ॥

यत –सर्वे धर्मा दानसत्यादयो ये, यन्मूलास्ते कीर्तिता पूर्वपुम्भि ।
एकैवेय सा दया सावधाने, साध्या सद्भि सिद्धिसन्धानदूती ॥ ८१० ॥

यत –द्यूतकारस्तलारक्षस्तैलिको मासविक्रयी । वार्धकिर्नृपतिर्वैद्य, कृपया सप्त वर्जिता· ॥ ११ ॥
तस्याग्रे चित्तरङ्गेण, किन्दारि वादयन्पुन । गातुं लग्नस्तदा योगी, स योगी वी(गिवा)णिभाषया ॥१२॥

सा च–सोनाकरपुरिसइ काहु किजइ रे, जइ नही दया प्रधान,
तीनइ सोनइ सोह किसी रे, जीणइ त्रूटइ कान ॥ १३ ॥

दूहा–भारवहु काई जडे जनोई, दया विण धरम न कोई ।
जीवदया तुम्हे पालउ वापू, हीयडइ निरमल होई ॥ १४ ॥

एभिर्वाक्यैर्धर्मदत्तो, विश्वस्त प्राह हे विभो ! । ब्रूहि केन प्रकारेण, निष्पादयासि पूरुषम् ? ॥ १५ ॥

योग्यूचे शृणु भो भद्र! सद्रक्ताञ्जनिकामयम्। पुत्तलं कारयिष्यामि, सप्तहस्तप्रमाणकम् ॥ १६ ॥
मन्त्रेण पुत्तलं माषसर्षपक्षेपपूर्वकम्। अभिमन्त्र्याग्निकुण्डञ्च, क्षिप्त्वा होमः करिष्यते ॥ १७ ॥
उष्णशीतजलैर्वह्नावासिक्ते स्वर्णपूरुषः। भविष्यति क्षणादेव, महामन्त्रप्रभावतः ॥ १८ ॥
श्रुत्वेति धर्मदत्तोऽवक्, प्रसद्य त्वं कुरूद्यमम्। तेनोक्तं किं सुवर्णेन, कार्यं मे? योगिनो वयम् ॥ १९ ॥
परं तवैव कार्याय, परोपकृतिहेतुतः। उपक्रमं करिष्येऽथोपकारे दुर्लभा मतिः ॥ ८२० ॥
यतः—लक्ष्मीः परोपकाराय, विवेकाय सरस्वती। सन्ततिः सर्वसौख्याय, भवेद्धन्यस्य कस्यचित् ॥२१॥
परोपकाराय कृतघ्नमेतच्चलं शरीरं यदि याति यातु। काचेन चेद्वज्रमणिं लभेत, मूर्खोऽपि किं नेति पुनर्ब्रवीति
धर्म्मदत्तः पुनः प्राह, भगवन्! विश्वपावनः। तवेदृशी मतिः पुण्ये, यत्परार्थाय खिद्यति(सि) ॥२३ ॥
यतः—निष्पेषोऽस्थिचयस्य दुस्सहतरः कष्टं तुलारोपणम्, ग्राम्यस्त्रीकरलुञ्चनव्यतिकरस्तन्त्रीप्रहारव्यथा।
मातङ्गोज्झितगल्लवारिकणिकापातश्च कूर्चाहतिं, कर्प्पासेन परार्थसाधनकृते किं किं न चाङ्गीकृतम् ॥२४॥
योगिनोक्तं महाभाग! सपादलक्षपर्वतात्। शीतमुष्णञ्च पानीयं, आनीयेते प्रयत्नतः ॥ २५ ॥

गत्वा द्वाभ्या ततस्तत्रानीत कुण्डाज्जलद्वयम् । कारितश्च ततो रक्ताजनिकाकाष्ठजो नरः ॥ २६ ॥
नीत्वा होमस्य सामग्रीं, श्मशाने निशि योग्यसौ । गत कृष्णचतुर्दश्या, कुण्डे वह्नि कृतस्ततः॥२७॥
विमुक्त कुण्डकण्ठे स, रक्तचन्दनपुत्तल । रक्षामिषेण तत्पार्श्वे, खड्गो मुक्तश्च योगिना ॥ २८ ॥
कुमार प्रति(कुमार प्रतियोग्यूचे)योग्यूचे;किमास्ति तव सन्निधौ।आयुध लोहरक्षार्थ?धर्म्मदत्तस्ततोऽब्रवीत्
येनासिना मया पूर्वं, पापिष्ठो राक्षसो हत । पार्श्वे गुप्तोऽस्ति खड्गोऽसौ, योगिनोक्त न ते भयम्॥८३०॥
पराङ्मुख धर्म्मदत्त, सस्थाप्य तस्य पृष्ठके । मुक्त्वा च पुत्तल योगी, कुण्डकण्ठ उपाविशत् ॥ ३१ ॥
सर्षपानाक्षिपन्मन्त्रपूर्वक काष्ठजे नरे । धर्म्मदत्त चापि पृष्ठेऽताडयत्सर्षपाक्षतै' ॥ ३२ ॥
चिन्तित धर्मदत्तेनैतत्कपट (यन्न) ममोपरि । दुष्टेन योगिना तस्मात् (नून) प्रारब्ध कूटनाटकम्॥३३॥
अधुना कोऽस्ति मे मित्र, व्यसने पतिते सति? । य करिष्यति मे रक्षा, कि कर्त्तव्य मया तत ?॥३४॥
येन दत्तोऽस्ति(ऽस्मि)धर्मेण, तस्य धर्मस्य चिन्तनम् । धर्मदत्त करोति स्म, परमेष्ठिस्मृति तथा ॥३५॥
परमेष्ठिनमस्कार, सार नवपदात्मकम् । आत्मरक्षाकर वज्रपञ्जराभ स्मराम्यहम् ॥ ३६ ॥

काव्यम्—सङ्ग्रामसागरकरीन्द्रभुजङ्गसिंहदुर्व्याधिवह्निरिपुबन्धनसंभवानि ।
चौरग्रहभ्रमनिशाचरशाकिनीनां, नश्यन्ति पञ्चपरमेष्ठिपदैर्भयानि ॥ ३७ ॥

ॐ नमो अरिहन्ताणं, शिरस्कं शिरसि स्थितम् । ॐ नमो सर्वसिद्धाणं, ममाङ्गे वज्रपञ्जरम् ॥ ३८ ॥
इत्थं परममन्त्रेण, स्वाङ्गरक्षां चकार सः । सज्जीकृत्य ततः खड्गं, सावधानतया स्थितः ॥ ३९ ॥
यावदष्टोत्तरशता, हुतयः पूर्णतां गताः । वक्रीभूय तदालोक्य, योगी खड्गं करे दधौ ॥ ८४० ॥
तद्दृष्ट्वा धर्म्मदत्तेन, हतो योगी स लाघवात् । कुण्डमध्ये ततः क्षिप्तः, सिक्तः शीतोष्णवारिणा ॥४१॥
योगी स्वर्णनरश्चाभूत् , धर्म्मदत्तस्ततः क्षणम् । गतो मठे जलं पीत्वा, पुनस्तत्र समागतः ॥ ४२ ॥
तावत्स्वर्णनरस्तत्र, न दृष्टो मूर्च्छितोऽपतत् । स शीतपवनैर्लब्धचैतन्यश्चेत्यचिन्तयत् ॥ ४३ ॥
अहो मया हतो योगी, किञ्चित्प्राप्तं फलं नच । पृथुकोऽगात्करे दग्धो, भ्रष्टो ह्युभयतोऽप्यहम् ॥ ४४ ॥
चण्डालपाटके पातो, भिक्षापि चटिता नहि । अरे दैव ! त्वया चाहमेक एवोपलक्षितः ॥ ४५ ॥
मत्पृष्ठे त्वं जलं पीत्वा, स्थित एव विभाव्यते । दुःखस्योपरि यद्दुःखं, पात्यते मेऽग्रतोऽग्रतः ॥४६॥

पूर्वं पितृवियोगश्च, पश्चात्सागरपातनम् ॥ प्रियावियोग एतत्तु, किं त्वया विदधेऽधुना ? ॥ ४७ ॥

यत –अघटित घटना नयति ध्रुव, सुघटित क्षणभङ्गुरताकुलम् ।

जगदिद कुरुते सचराचर, विधिरहो बलवानिति मे मति ॥ ४८ ॥

विलपन्निति दु खात्स, पुनरेवमचिन्तयत् । मुषिता दु खिता ये च, तेषां वै पार्थिवो गति ॥ ४९ ॥

दुर्बलस्य बल राजाऽतस्त विज्ञापयाम्यहम् । अन्यथा कार्यसिद्धिर्मे, भविष्यति कदापि न ॥ ८५० ॥

यशोधवलराजान, प्रत्यूचे धर्मदत्तक । इति ध्यात्वा समुत्थाय, राजन् ! पार्श्वे तवागत ॥ ५१ ॥

राजन्नत्रैव वास्तव्यः, श्रीपतिश्रेष्ठिन सुत । धर्म्मदत्त सोऽहमेव, रावार्थमेष आगत ॥ ५२ ॥

मत्कथा स्वर्णमूर्त्तेश्चोत्पत्तिस्ते कथिता मया । पञ्चमो लोकपालस्त्व, यथा रुचिस्तथा कुरु ॥ ५३ ॥

यत –दुष्टस्य दण्ड स्वजनस्य पूजा, न्यायेन कोशस्य च सम्प्रवृद्धि ।

अपक्षपातोऽर्थिषु राष्ट्ररक्षा, पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ ५४ ॥

शत्रूणा तपन सदैव सुहृदामानन्दनश्चन्द्रवत्, पात्रापात्रपरीक्षणे सुरगुरुर्दानेषु कर्णोपम ।

नीतौ रामनिभो युधिष्ठिरसमः सत्ये श्रियाश्रीपतिः, स्वीये सत्यपि पक्षपातसुभगः स्वामी यथार्थो भवेत् ५९

इति श्रीवीरदेशनायां श्रीधर्म्मकल्पद्रुमे मुख्यचतुःशाखिके प्रथमदानशाखायां धर्मदत्तकथासंयुते श्रीचन्द्रयशानृपाख्याने द्वितीयः पल्लवः समाप्तः ॥ २ ॥ ५९ ॥

---

इन्दुःप्रीणकतां प्रतापमरुणो गाम्भीर्यमम्भोनिधिस्तुङ्गत्वं कनकाचलो हिमगिरिः शैत्यं स्वतेजोऽनलः।
ऐश्वर्यं धनदः शमश्च ऋषयः सर्वंसहत्वं धरा, सर्वे माङ्गलिकं व्यधुर्निजनिजं यस्मै स जीयान्नृपः ॥ १॥
इत्याशिषं ददद्धर्म्मदत्तोऽथ नृपतिं प्रति । पुनरूचे मम स्वामिन् ! दीयते किञ्चिदुत्तरम् ॥ २ ॥
राजोचे भो महाभागोपायः कोऽपि न दृश्यते । न जानीमो वयं केन, गृहीतः कानको नरः ? ॥ ३ ॥
ततः किमुत्तरं दद्मः ? परं मे वचनं शृणु । लक्षं स्वर्णस्य कोटिं वा, याचस्व त्वं निजेच्छया ॥ ४॥
यथा तद्दाप्यते कोशात्सन्तोषस्तव जायते । ममापि न भवेत्पश्चादपकीर्त्तिः कदाऽप्यहो ॥ ५ ॥
पश्चादपि कदा कुत्र, ज्ञास्यामि स्वर्णपूरुषम् । तुभ्यमेवार्प्पयिष्यामि, करिष्ये स्वस्थतां तव ॥ ६ ॥

श्रुत्वेव धर्मदत्तोऽवक्, स्वर्णमस्तु धन तव । युष्मद्धेम्ना न मे कार्य, वाल्यते हेमपूरुष ॥ ७ ॥
इत्युक्तेपि समर्थस्त्व, यदि मद्वस्तुवालने। करिष्यासि प्रसाद न, तदभाग्य ममास्ति वे ॥ ८ ॥
निर्वृतिर्मे तदैव स्यात्, यदा प्राप्नोमि मद्धनम् । त्वत्सुवर्ण न गृह्णामि, सद्भिर्मानो न मुच्यते ॥ ९ ॥
यत —वाप्पीडउ जल त पीयइ, ज घण तुट्ठउ देइ।माणविवज्जउ वरपडइ, मरइ न चञ्चू भरेई ॥१०॥
एक एव खगो मानी, सुख जीवति चातक । पिपासितो वा म्रियते, याचते वा पुरन्दरम् ॥ ११ ॥
काव्यम्-कूपे पानमधोमुख भवति मे नद्यो वराका स्त्रिय ,सामान्य वकटिट्टिभैर्वरसरश्चैव समालोच्य तत्।
नादत्ते तृपितोऽपि नीचसलिल क्रूरैर्वृत जन्तुभिः, मानादुन्नतकन्धरोऽमरपति तद्याचते चातकः ॥ १२ ॥
अत स्वामिस्त्वया नैव, वाच्य मे हेमसङ्ग्रहे । इति तन्निश्चय ज्ञात्वा, राजा चित्ते व्यचिन्तयत्॥ १३ ॥
चेन्ममाप्याश्रितस्यास्य, कार्य सिद्धि न यास्यति । तदाऽह कि मुख स्वीय, दर्शयिष्यामि भूतले?॥१४॥
ध्यात्वैव बीटक हस्ते, गृहीत्वैवमभाषत । मत्सभाया स कोऽप्यस्ति, यो वालयति पूरुषम् ॥ १५ ॥

सविस्मयास्तदा लोकाश्चिन्तयन्ति स्म चेतसा(सि)। अहो कथं कुमारोऽसौ, वालयिष्यति पूरुषम्?॥१७॥
अथ राजसभामध्यात्, धर्मदत्तनृपाङ्गजौ। चलितौ द्वावपि क्षिप्रं, तत्कार्यकरणेच्छया ॥ १८ ॥
वने गत्वा विलम्बार्थमित्युक्तं राजसूनुना ! देवेन दानवेनाथ, खेचरेण नरेण वा ॥ १९ ॥
येन केन हृतो यावत्, ज्ञायते न हि पूरुषः। तावन्महोद्यमेनापि, कार्यसिद्धिर्भवेन्न हि ॥ २० ॥
अतो रात्रौ वने तत्र, स्थीयते च्छन्नवृत्तितः। यथा ज्ञात्वा स्वरूपं तत्, क्रियते कार्यसाधनम् ॥ २१ ॥
एवञ्च तत् विमृश्य द्वौ, स्मशाने शर्वरीमुखे। निविष्टौ धाष्टर्यमालम्ब्य; निशाचरभयेऽपिच ॥ २२ ॥
धर्मदत्तः सनिद्रोऽभूत्, जागर्त्ति क्षितिपाङ्गजः। दूरे तेन तदा दिव्यवाद्यगानरवः श्रुतः ॥ २३ ॥
मुक्त्वा सुप्तं धर्मदत्तमभिज्ञानं पदे पदे। कुर्वन्शब्दानुसारेण, ययौ तत्र स कौतुकी ॥ २४ ॥
ददर्शाग्रे च यक्षस्य, भवनं स्वर्गावि(स्वर्वि)मानवत्। मध्येऽद्राक्षीत्ततो दत्तकपाटविवरेण सः ॥ २५ ॥
अष्टोत्तरशतं तत्र, नृत्यन्ति सुरकन्यकाः। तासां मध्ये ददर्शैकां, नारीं सोऽधिकरूपिणीम् ॥ २६ ॥
मुहूर्त्तं कौतुकं वीक्ष्य, व्यावृत्तोऽसौ कुमारकः। आगतो धर्मदत्तस्य, समीपे सोऽप्यजागरीत् ॥ २७ ॥

स पृष्टो राजपुत्रेण, त्वयाऽहो मित्र ! साम्प्रतम्। सुतेनेह श्रुत किञ्चिद्धर्मदत्तस्ततोऽवदत् ॥ २८ ॥
शृगालव्यालशार्दूलोलूकशूकरखड्गिनाम्। पिशाचप्रेतभूताना, श्रुता' शब्दा मया घना ॥ २९ ॥
तत स्मित्वा कुमारेण, नृत्यवार्त्ता प्रकीर्त्तिता । दिव्यरूपधरा चैका, प्रोक्ताभिज्ञानसयुता ॥ ३० ॥
तच्छ्रुत्वा धर्मदत्तस्त, प्रत्यूचे सा मम प्रिया । घटते गम्यते तत्र, द्रुत सा च विलोक्यते ॥ ३१ ॥
तत स्थानाद्गतो यावत्तौ द्वौ यक्षस्य वेश्मनि । न दृष्ट नर्त्तन तावन्न दृष्टा सा च सुन्दरी ॥ ३२ ॥
हस्तौ प्रघर्षयन्धर्म्मदत्त पप्रच्छ साऽबला । कियन्माना च कीदृक्षवर्णा च कतिवार्षिका ? ॥ ३३ ॥
स्वरूप सकल तस्या, कथित भूपसूनुना । धर्म्मदत्तोऽवदत्स्वर्णनरेणाल वयस्य ! मे ॥ ३४ ॥
हे भ्रातर्मम पत्नीं ता, केनोपायेन वालय । तर्हि मे जीवित दत्त, प्राप्त सर्वस्वमेव च ॥ ३५ ॥
प्रभातसमये जाते, द्वारमुद्घाटित तदा । यक्षाग्रे च कुमारेण, प्रारब्धमिति वर्त्तसम् ॥ ३६ ॥
कृतान्नाम्बुपरित्यागो, रागरङ्गविवर्जित । निस्स्पृहो निरहङ्कार , कुमारोऽसौ यतीन्द्रवत् ॥ ३७ ॥
एकाग्र मानस कृत्वा, धर्मदत्तकृते तत । निविष्टो निश्चलो भूत्वा, दर्भसस्तारके कृती ॥ ३८ ॥

युग्मम्

एकचित्तेन सिद्धिः स्यात्, द्विधाचित्तो विनश्यति । चित्ते सुदृढता यस्य, तस्य किं नहि सिध्यति?३९
एति प्रसन्नतां सर्वमेकचित्तेन सेवितम् । दरिद्रभक्त्या किं नाभूत्, राजपालो रमास्पदम्? ॥ ४० ॥
क्षत्रियो देवदत्ताख्यः, पुरेऽभूत् रथमर्द्दने । तस्य दैववशाज्जज्ञे, राजपालाभिधः सुतः ॥ ४१ ॥
तस्मिन् षाण्मासिके जाते, परलोकं गतः पिता । माताऽपि पञ्चवर्षीये, मरणं शरणं ययौ ॥ ४२ ॥
विषपुञ्जनिभं मत्वा, तं बालं स्वजनाः परे । सर्प्पवत्तत्यजुर्दूरमशरण्यं दयोज्झिताः ॥ ४३ ॥
सोऽपि स्वकर्मणा वृद्धिं, पुपोष गिरिवृक्षवत् । प्रपन्नो यौवनावस्थां, दध्यावित्यर्थवर्जितः ॥ ४४ ॥
यौवनं सफलं भोगैः, भोगाः स्युः सफला धनैः । तद्विना मानुषं जन्म, जायते वनपुष्पवत् ॥ ४५ ॥
ततो देवानसौ नित्यं, नुनाव धनलोलुपः । न कोऽपि द्रव्यदानार्थमलंभूष्णुरभूत्सुरः ॥ ४६ ॥
ततो जातविषादोऽसौ, तान् देवान् पूर्वयाचितान् । सावज्ञं तृणवत्कोपात्, विचिक्राय चतुष्पथे॥४७॥
परं दरिद्ररूपं स, मृन्मयं सपरश्वधम् । निर्म्माय निजगेहान्तः, पूजयामास सादरम् ॥४८॥

कदा तत्रैव मुक्त्वा त, दरिद्र स च धीधन. । जगाम योजनशत, दरिद्रदरकातर ॥ ४९ ॥
तत्र चन्द्रापुरीमध्य,, प्रविशन् शून्यसद्मनि । स त दरिद्रमद्राक्षीत्, सभ्रमोत्कर्षभासुर ॥ ५० ॥
अहो सकलदेवस्य, प्रसादो मयि कीदृश ? । यद्योजनशत मुक्तो, मत्पृष्ठि न मुमोच य ॥ ५१ ॥
प्राञ्जलिर्गद्गदगिरा, तुष्टाव गुणरञ्जित । हरिशङ्करप्रमुखास्त्वत्पुर' के सुरोत्तमा ? ॥ ५२ ॥

यत –हे दारिद्र ! नमस्तुभ्य, सिद्धोऽह त्वत्प्रसादत ।
अह सर्वत्र पश्यामि, माश्च कोऽपि न पश्यति ॥ ५३ ॥

इति स्तौति प्रतिदिन, पूजमानोऽथ भक्तिमान् । सेवते देवतामिव, त दरिद्र स दुर्गत ॥ ५४ ॥
इतश्च चन्द्राधिपते, पट्टहस्ती विशृङ्खल । पातयन्पुरसौधानि, मर्दयन्मनुजास्तथा ॥ ५५ ॥
नामयन् वासराधीश, मोहयन्मनुजेश्वरम् । आलानस्तम्भमुन्मूल्य, विचचार महोद्धर (मदोद्धत) ५६
त वीक्ष्य विवश राजाऽघोपयन् डिण्डिम पुरे । वशीकरोति करिणं, तस्याह वाञ्छित ददे ॥ ५७ ॥
श्रुत्वा दरिद्रभक्तेन, तेन गीतकलाविदा । मन्द्रमध्यतारभेदे, क्षणान्नागो वशीकृत ॥ ५८ ॥

अयाचि भूपादिष्टेन, प्रसादस्तेन मानिना । दीपा न कार्याः केनापि, मद्वर्ज्जं दीपवासरे ॥ ५९ ॥
तथेति राज्ञाऽनुज्ञातो, रोरो दीपमहे निशि । निजोटजाभितो दीप्रान्, भूरिदीपानचीकरत् ॥ ६० ॥
तस्यां निशायां कमला, बभ्राम सकलां पुरीम् । क्वापि दीपमपश्यन्ती, समेता तस्य सद्मनि ॥ ६१ ॥
उद्यम्य लकुटं सोऽथ, कमलामनु धावितः । दरिद्रे स्वामिनि सति, त्वं कुतोऽत्रैषि चञ्चले ! ॥ ६२ ॥
इति भक्त्या तया हृष्टो, दरिद्रोऽपि हसन् जगौ । त्वयि तुष्टो महारोर ! वरं ब्रूहि विशारद ॥ ६३ ॥
शब्दच्छलज्ञः स प्राह, यदि तुष्टोऽसि तत्कदा । मदीयेन त्वया भाव्यं, किं समीहेऽपरं त्वयि ॥ ६४ ॥
छलितेऽस्मिन्न वागूचे, निर्गते निजमन्दिरात् । सोऽपि पद्मां समाहूय, पूजयित्वा नतिं व्यधात् ॥६५॥
मातर्दरिद्रे मध्यस्थे, न योग्यः स्यात्तवागमः । कल्पवल्ली करीरेण, किं योजयितुमर्हति ? ॥ ६६ ॥
प्रातः प्रजेशप्रत्यक्षं, प्रीता पद्मा प्रमोदतः । भूमिखण्डस्य कस्यापि, राज्यमस्मै वितीर्णवान् ॥ ६७ ॥

इति एकाग्रचित्तविषये राजपालकथा समाप्ता

अथास्यैकाग्रचित्तस्य, दृढासनास्थितस्य च । रूपाणि सर्प्पसिंहानां, दर्शितानि सुरैर्निशि ॥ ६८ ॥

तथापि राजपुत्रस्य, क्षुभित न मनो मनाक् । एव तस्य दिना सप्त, सञ्जाता सत्त्वशालिन ॥ ६९ ॥
सप्तोपवासै प्रत्यक्षीभूय यक्षो जगाद स । याचसे किं महाधीर!, स ऊचे शृणु यक्षराट्! ॥ ७० ॥
धर्मदत्तस्य या पत्नी, तामानीय ममार्प्पय । यक्षेणोक्तमसाध्य मे, यत॰ सा मत्प्रियावशा ॥ ७१ ॥
न शक्यते मया दातु, श्रुत्वैव नृपजोऽब्रवीत् । सुन्दरी सा त्वया यक्ष!, क्व प्राप्ता कथय प्रभो! ॥ ७२ ॥
यक्षो जगाद हे भद्र!, कदाऽह प्रियया युत॰ । रात्रौ क्वापि वने प्राप्तो, दृष्टा सा दिव्यधारिणी ॥ ७३ ॥
यक्षिण्या मे तदा प्रोक्त, स्वामिन्! दिव्यैकरूपिणी । मानवी दृश्यते सुप्ताऽपहृत्यैना ममार्प्पय ॥ ७४ ॥
भर्तृपार्श्वात्ततो हृत्वा, प्रियायै सा मयाऽर्पिता । तां दातु नैव शक्तोऽहमित्युक्त्वाऽसौ तिरोदधौ॥७५॥
कुमारेण तदाऽचिन्ति, धिग् देवान् येऽबलावशा । किङ्करा इव दृश्यन्ते, मानवास्तर्हि किं पुन॰? ॥७६॥
गाथा–हरिहरचउराणणचन्दसूरखन्धाइणोऽवि जे देवा । नारीण किङ्करत्त, करन्ति धिद्धी विसय-
तिण्हा ॥ ७७ ॥
यक्षिणीं तामथोद्दिश्य, कुर्वेऽत्राह पुनस्तपः । यथा मे कार्यसिद्धि॰ स्यात्तपो हि विषमार्थकृत ॥ ७८ ॥

त्यक्त्वा पञ्च प्रमादांश्च, विमुच्य मदमत्सरौ । रत्नपालयुतो भूपो, यथास्थानमुपाविशत् ॥ २३ ॥
गुरुर्धर्म्माशिष दत्वा, नृपादीना च तत्पुर । विवेकोद्योतदीपाभा, प्रारेभे धर्म्मदेशनाम् ॥ २४ ॥
भो भव्या ! श्रूयता सम्यगेतत्ससारचेष्टितम् । सर्षपेण समं सौख्यं, दु.ख मेरुसम भवे ॥ २५ ॥

यथा–चला विभूतिर्ननु जीवितं चल, विनश्वर यौवनमप्यकालतः ।
इदं शरीर वहुरोगमन्दिर, विमृश्य चैवं कुरु धर्म्ममन्वहम् ॥ २६ ॥

काव्यम्–आसाद्य मानुष्यमथार्यदेश, जातिं प्रशस्यां कुलमुत्तमञ्च ।
रात्रिन्दिवा पुण्यमहो भजस्व, तस्योदयात्सर्वमनीषित स्यात् ॥ २७ ॥

काव्यम्–सूत्रार्थी रत्नमालां दलति दहति वा चन्दन भस्महेतो-
र्नाव चाब्धौ भिनत्ति स्वहितविरहितो लोहकील जिघृक्षु ।
प्राप्याक्षेयं निधि वा त्यजति जडमतिर्नित्यभिक्षाभिलाषी,
सद्धर्म्मं यो न कुर्यादसुलनृभव प्राप्य कृच्छ्रात्सुखैषी ॥ २८ ॥

अस्मिन्नपारसंसारसागरे दुस्तरेऽपि च । लघुकर्म्मा तरत्येव, परो ब्रुडति लोष्टवत् ॥ २९ ॥
यथा प्रोतप्रयोगेण, सागरस्यावगाहनात् । दुर्लभान्यपि वस्तूनि, नीयन्ते पोतवाहकैः ॥ ४३० ॥
तथा गुरूपदेशेन, संसारस्यावगाहनात् । धर्मरत्नं हि दुष्प्रापं, प्राप्यते भव्यजन्तुभिः ॥ ३१ ॥
संप्राप्य भवपाथोधौ, वोधिरत्नं सुदुर्ल्लभम् । रक्षणीयं प्रयत्नेन, यथा हरति कोऽपि न ॥ ३२ ॥
संयमार्थी नृपोऽप्यग्रे, विशेषाद् गुरुवाक्यतः । प्रतिबुद्धो महासेनो, विधिना व्रतमग्रहीत् ॥ ३३ ॥
अथ ज्ञानगजारूढः, शीलसन्नाहभृत् दृढम् । गृहीतध्यानखड्गश्च, दधत्संवेगखेटकम् ॥ ३४ ॥
गुर्वाज्ञाटोपकाटोपः, सकोपः क्रूरकर्म्मसु । चित्रं क्षमाधरः सोऽभून्मोहारिं जेतुमुत्सुकः ॥ ३५ ॥

युग्मम् ।

यतः—संमोहक्षितिपस्य संसृतिवधूवैधव्यदीक्षां दिशन्, सैन्येनेव चतुर्विधेन गुरुणा सङ्घेन दत्तोदयः । गुर्व्वादेशनयानपत्रममलं बिभ्रत् शिरस्याभवं, प्रव्रज्याभिधया विधेहि महिमाप्राज्यं स्वराज्यं चिरम् ३६॥
महाव्रतानि पञ्चापि, पञ्चाचारान् विचारतः । गुप्तीस्तिस्रोऽपि पुण्यात्मा, पालयामास सोऽन्वहम्॥३७॥

तदा तु रत्नपालेन, कृतो दीक्षोत्सवो महान् । पुण्यप्रभावक· सोऽपि, सञ्जात श्रावकोत्तम ॥ ३८ ॥
राजर्षिश्रीमहासेनयुक्तः शय्यम्भवो गुरु । विजहार महीपीठे, रत्नपालोऽप्यगात्पुरम् ॥ ३९ ॥
अमारीघोपणापूर्वं, दिनान्यष्टौ ततो नृप । जिनालयेषु नृत्यादिमहोत्सवमकारयत् ॥ ४४० ॥
वर वृणीध्वमित्यादिशब्दोच्चारणपूर्वकम् । ददौ राजा ततो दान, दानमण्डपमाश्रितः ॥ ४१ ॥
दानात्सञ्जायते कीर्त्तिरत्तिर्नश्यति दानत । दान सम्पन्निदानञ्च, दान देयमतो बुधैः ॥ ४२ ॥
यत —सङ्ग्रहैकपर प्राप, समुद्रोऽपि रसातलम् । दाता तु जलद· पश्य, भुवनोपरि गर्जति ॥ ४३ ॥
शुभेऽह्नि रत्नपालस्य, मिलित्वाऽन्यनृपादिभि· । भूय पट्टाभिपेकोऽथ, विदधे विविधोत्सवैः ॥ ४४ ॥
सीमाधिपा नृपास्तेन, कृता नमितकन्धरा । गजादिसारवस्तूनि, लात्वा तस्य डुढौकिरे ॥ ४५ ॥
स भक्तसेवकामात्यै·, ससेवितपदाम्बुज । न्यायेन पालयामास, राज्यं राजगुणान्वितः ॥ ४६ ॥

यत —शत्रूणा तपन· सदैव सुहृदामानन्दनश्चन्द्रव-
त्पात्रापात्रपरीक्षणे सुरगुरुर्दानेपु कर्णोपम ।

नीतौ रामनिभो युधिष्ठिरसमः सत्ये श्रिया श्रीपतिः ।
स्वीये सत्यपि पक्षपातसुभगः स्वामी यथार्थो भवेत् ॥ ४७ ॥

क्षमी दाता गुणग्राही, स्वामी दुःखेन लभ्यते । अनुरक्तः शुचिर्दक्षो, स्वामिन्! भृत्योऽपि दुर्लभः॥४८॥
नाकालमृत्युर्न व्याधिर्न दुर्भिक्षं न तस्कराः । भवन्ति सत्त्वसंपन्ने, धर्म्मनिष्ठे महीपतौ ॥ ४९ ॥
गुणेषु रागो व्यसनेष्वनादरो, रतिर्नये यस्य दया च दीने । चिरं स भुञ्ज्याच्चलचामरांशुकाः, सितात-
पत्राभरणा नृपश्रियः ॥ ४५० ॥
राज्ञा सन्तोषिताः पौराश्चौरातङ्कविवर्जिताः । न्यायेन पालिता नित्यं, न कोऽपि पीडितो मनाक्॥५१॥
तदा तत्पुरवासिन्यः, प्रजाश्चेतस्यचिन्तयन् । अहो प्राक् पुण्यमस्माकं, येनासीदीदृशः प्रभुः ॥ ५२ ॥
इत्थं पालयतो राज्यं, सार्धं भार्याद्वयेन च । तस्यानुभवतो भोगान्, सुखं कालो ययौ बहुः ॥ ५३ ॥
तत्र जातेषु वर्षेषु, राज्ञः पञ्चशतेष्वथ । राज्ञ्यां कनकमञ्जर्यां, सुतोऽभूत्सिंहविक्रमः ॥ ५४ ॥
जातः प्रवर्धमानोऽसौ, पञ्चविंशतिवार्षिकः । द्वासप्ततिकलोपेतो, रूपेणैव जितामरः ॥ ५५ ॥

पवित्रो विकसन्नेत्रो, महास्कन्धो महाभुज । दुर्दान्तो दुष्टपापिष्ठे, धर्म्मिष्ठे धनदोपम ॥ ५६ ॥
सर्वसौम्यगुणाधार, कृपासार क्षमाधर । प्रवीण पुण्यकार्येषु, सर्वविद्याविशारदः ॥ ५७ ॥
षट्त्रिंशदायुधाभ्यासविज्ञो विज्ञानसागर । मन्त्रतन्त्रादितत्त्वज्ञो, मुख्यो दक्षेषु दीनवान् ॥ ५८ ॥
सिंहविक्रमनामासौ, कुमार. सारविक्रम. । क्रीडन् विविधक्रीडाभि., कालं नयति लीलया ॥ ५९ ॥
अन्यदा रात्रिशेषेऽथ, गतनिन्द्र' प्रजापति. । नमस्कारं स्मरश्चित्ते राज्य सस्मार पैतृकम् ॥ ४६० ॥

चतुर्भि कलापकम् ॥

प्रभाते मन्त्रिसामन्तादीनाञ्च पुरतोऽवदत् । सुत सस्थाप्य राज्येऽत्र, निजे राज्येऽथ याम्यहम् ॥ ६१ ॥
ईदृश वचन श्रुत्वा, प्रोचे परिजनो विभो ! । न वाल शोभनो राजा, स्मृत्युक्त हि विचारय ॥ ६२ ॥
वालराज्य भवेद्यत्र, द्विराज्य यत्र वा भवेत् । स्त्रीराज्य मूर्खराज्यञ्च, यत्र स्यात्तत्र नो वसेत् ॥ ६३ ॥
सा किं सभा यत्र न सन्ति वृद्धा, वृद्धा न ते ये न वदन्ति धर्म्मम् । धर्म्म. स नो यत्र न चैव सत्यं,
सत्य हि तद्यत्र परस्य रक्षा ॥ ६४ ॥

दानं प्रजापरित्राणं न्यायोऽर्थो जनरञ्जनम् । राज्यकल्पद्रुमस्यैता, विपुलाः फलसंपदः ॥ ६५ ॥
कुलशीलगुणोपेतं, सत्यधर्मपरायणम् । रूपिणं सुप्रसन्नं च, राज्याध्यक्षन्तु कारयेत् ॥ ६६ ॥
प्राज्ञे नियोजितेऽमात्ये, त्रयो गुणा महीपतेः । यशः स्वर्गनिवासश्च, पुष्कलश्च धनागमः ॥ ६७ ॥
कृतेष्वमात्येषु पुरातनेषु, चिरं स्थिरा राजति राज्यलक्ष्मीः । यतः शरावेषु नवेषु वारि, न्यस्तं समस्तं विलयं प्रयाति ॥ ६८ ॥
मूर्खे नियोजितेऽमात्ये, त्रयो दोषाः महीपतेः । अयशः स्वार्थनाशश्च, नरके पतनं ध्रुवम् ॥ ६९ ॥
क्रमागतः शुचिर्धीरः, सर्वरत्नपरीक्षकः । सुधी रक्षोऽभिचारी च, कोशाध्यक्षो विधीयते ॥ ४७० ॥
इङ्गिताकारतत्त्वज्ञः, प्रियवाक् प्रियदर्शनः । सकृदुक्तग्रही दक्षः, प्रतिहारः प्रशस्यते ॥ ७१ ॥
मेधावी पटुवाग् दक्षः, परचित्तोपलक्षकः । धीरो यथाऽर्थवादी च, दूतः स्यात्सप्तभिर्गुणैः ॥ ७२ ॥
धर्मशास्त्रार्थकुशलाः, कुलीनाः सत्यवादिनः । समाः शत्रौ च मित्रे च, नृपतेः स्युः सभासदः ॥७३॥
राज्यस्थितिमिमां राजन्!, विचारज्ञ! विचारय । बालोऽयन्ते सुतः स्वामिन्!, राज्यभारे कथं क्षमः?७४

राजोचे श्रूयता सभ्या, भवद्भि• किं प्रजल्पितम् ?। जनोक्ति कि न जानीथ, लघुस्थूलेषु को गुणः?॥७५॥

काव्यम्—हस्ती स्थूलतनु स चाङ्कुशवश कि हस्तिमात्रोऽङ्कुश ,

वज्रेणाभिहता• पतन्ति गिरय कि वज्रमात्रो गिरिः ?।

दीपे प्रज्वलिते प्रणश्यति तम कि दीपमात्रं तम-

स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ? ॥ ७६ ॥

लघुस्थूलेषु देहेषु, क• प्रयोग प्रवर्त्तते । कलिङ्गफलमुत्तुङ्गं, मरिच हि चमत्कृतम् ॥ ७७ ॥

भूयोऽपि श्रूयता वृद्धैर्भवद्भि• परिवारित । बालोऽप्यसौ सुपक्ष• सन्, भविष्यति गुणाग्रणी ॥ ७८ ॥

यत —सुपक्षो लभते लक्ष, गुणहीनोऽपि मार्गण• । पक्षहीनो विलक्षोऽथ, मार्गणोऽगुणपूरितः ॥ ७९ ॥

सुपक्षो भक्षते काको, वृक्षस्थो विविध फलम् । दूरस्थोऽपि निरीक्षेत, विनापक्षस्तु केसरी ॥ १८० ॥

एवमाख्याय दृष्टान्ताननुमत्या च मन्त्रिणाम् । राज्ये सस्थापयामास, मुहूर्त्ते निजनन्दनम् ॥ ८१ ॥

महानन्दपुरे रम्ये, राजाऽभूत्सिंहविक्रम• । एवमुद्घोषणा तत्र, कारयामास भूपति• ॥ ८२ ॥

नवे राज्ञि कृते राज्यस्थितिः काचिन्नवा भवेत् । महानन्देति नामातो, नवं रत्नपुरे कृतम् ॥ ८३ ॥
मूलप्रधानमुख्यानां, शिक्षामेवं नृपो ददौ । राज्यरक्षा सदा कार्या, कार्या चिन्ता सुतस्य मे ॥ ८४ ॥
सुसेव्यो लघुरप्येषो, धार्याज्ञा सर्वदाऽस्य च । अहं पक्षं करिष्यामि, निजस्थाने गतोऽपि सन् ॥ ८५ ॥
एवं हि बहुधालाप्य, वस्त्राभरणदानतः । सन्तोष्य राजवर्गं तं, प्रीणिताश्च प्रजा अपि ॥ ८६ ॥
पुनः स्मृताऽथ सा देवी, ययाऽऽनीतः स वेडया । प्रत्यक्षीभूय साऽप्यूचे, किं स्मृताऽहं त्वया नृपः ॥ ८७ ॥
राजोचे शृणु हे शक्ते !, तव भक्तिकृते मया । मम पुत्रोऽत्र मुक्तोऽस्ति, पालनीयः प्रयत्नतः ॥ ८८ ॥
सारा कार्या त्वया देवी, तस्य राज्ञो दिवानिशम् । पूजयिष्यति सोऽपि त्वां, सेवकस्ते भविष्यति ॥८९॥
अन्यच्चैकं विमानं त्वं, नवीनं कुरु मत्कृते । यत्रारूढो नभोमार्गे, स्वपुरे यामि लीलया ॥ ४९० ॥
देवी प्रोचे भवत्सूनोश्चिन्ताऽस्ति मम मानसे । एवमुक्त्वा विमानञ्च, कृत्वा दत्त्वा गता सुरी ॥ ९१ ॥
अनुज्ञाप्य ततो लोकान्, पुत्रादीन् स्वजनानपि । राजा विमानमारुह्य, चचाल स्वपुरं प्रति ॥ ९२ ॥
गजाश्वरथपत्त्यादि, सैन्यं पृष्ठेऽचलद्भुवि । तदा विचित्रवादित्रध्वनिभिः पूरितं नभः ॥ ९३ ॥

महीशो महान् रत्नपालाभिधान , खमार्गे व्रजन् दिव्यराजर्द्धिमान । नरै खेचरै• भक्तित स्तूयमानस्तदा
शोभते देवतावत्प्रधान ॥ ९४ ॥

तत• शीघ्रं गतो राजा, विमानस्थ पुरे निजे । लोका प्रमुदिताः सर्वे, चिराद्भूपागमे सति ॥ ९५ ॥
मन्त्र्याद्या• सम्मुखा जग्म', पतिता नृपपादयो । राज्ञीद्वयान्वितो राजा, प्रविवेशोत्सवात् पुरम् ॥९६॥
गृहे गृहे स्म गायन्ति, सुशृङ्गारास्तदाऽङ्गना । राज्ञो वर्द्धापन चक्रु , पौरा प्राभृतपूर्वकम् ॥ ९७ ॥
निष्कण्टक निरातङ्क, राज्य प्राज्य करोत्यसौ । पुण्यमपि च पुण्यात्मा, विदधाति दिवानिशम् ॥९८॥
एव विवाहसवम्न्धा, यासामत्र प्रकीर्त्तिता । महिष्यो नव मुख्यास्तास्तस्य राज्ञोऽभवन्निमा' ॥ ९९ ॥
शृङ्गारसुन्दरी चाद्या, द्वितीया रत्नवत्यपि । पत्रवल्ली मोहवल्ली, तत• सौभाग्यमञ्जरी ॥ ५०० ॥
देवसेना च गन्धर्वसेना कनकमञ्जरी । गुणमञ्जरी चैतास्ता, नामभिर्नव कीर्त्तिता ॥ १ ॥
नवैता निधय इव, साक्षात्पूर्वभवप्रिया: । तथा त्रिशत्सहस्राणि, राज्ञो राइयोऽभवन्परा ॥ २ ॥
पट्त्रिशत्कोटयो ग्रामाः, पत्तय• पष्टिकोटय । त्रिशल्लक्षाश्च प्रत्येक, रथनागेन्द्रवाजिनाम् ॥ ३ ॥

पत्तनद्वीपदुर्गाणा, वेलाकूलकरीटिनाम् । कर्वटखेटद्रोणानां, सहस्रा विंशतिर्मताः ॥ ४ ॥ युग्मम् ।
हेमाङ्गदादयो विद्याधरेशाश्च सहस्रशः । सेवाञ्च चक्रिरे तस्य, नित्यं सद्भक्तियुक्तिभिः ॥ ५ ॥
स नित्यं कोटिसङ्ख्यस्य, कनकस्य व्ययं व्यधात् । ददौ च परिवाराय, वस्त्राण्याभरणानि च ॥ ६ ॥
कुम्पकस्थरसात्तस्य, संपद्येत धनं बहु । रसप्रभावतो राज्ये, न दुर्भिक्षं न डामरम् ॥ ७ ॥
व्याधयो नेतयो नैव, न दौःस्थ्यं नैव पीडनम् । सुखेन गमयामास, कालं सर्वजनोऽपि च ॥ ८ ॥
देवेन्द्रवन्नरेन्द्रोऽपि, दिव्यभोगान् बुभोज सः । एकच्छत्रमयं राज्यं, चक्रे च चक्रवर्त्तिवत् ॥ ९ ॥
एवं गतानि वर्षाणि, दश लक्षाणि भूभुजः । शतसंख्यसुता जाता, गृहस्थद्रुमसत्फलाः ॥ ५१० ॥
नामतस्तेऽभवन् पुत्रा, मेघहेमरथादयः । शुभलक्षणसम्पूर्णाः, सर्वावयवसुन्दराः ॥ ११ ॥
सुरूपाः सुभगाः सौम्याः, सर्वविद्याविशारदाः । संप्राप्तयौवनाः सर्व्वे, कृतपाणिग्रहोत्सवाः ॥ १२ ॥
एवं चामारियात्रादि, पुण्यं राज्ञि प्रकुर्वति । सूरिः सुमतिसेनाह्वः, केवल्यागारपुरेऽन्यदा ॥ १३ ॥
श्रीसूरिमागतं श्रुत्वा, राजा हर्षप्रपूरितः । परिवारेण संयुक्तो, वन्दितुं गतवान्वने ॥ १४ ॥

गुरुं नत्वा यथास्थानमुपविष्टो धराधिप. । प्रारेभे देशना सूरिर्भव्याम्भोरुहबोधदाम् ॥ १५ ॥
अहो ससारवासेऽस्मिन्, जन्तवो जन्मकोटिपु । उत्पद्यन्ते विपद्यन्ते, लभन्ते न सुख क्वचित् ॥ १६ ॥
यतः—चला विभूति क्षणभङ्गयौवन, कृतान्तदन्तान्तरवर्त्ति जीवितम् ।
तथाप्यवज्ञा परलोकसाधने, अहो नृणा विस्मयकारि चेष्टितम् ॥ १७ ॥
यत्नेन पापानि समाचरन्ति, पुण्य प्रसङ्गादपि नाचरन्ति । आश्चर्यमेतच्च मनुष्यलोके, क्षीर परित्यज्य
विप पिबन्ति ॥ १८ ॥
पुन प्रभात पुनरेव शर्वरी, पुन शशाङ्क पुनरुद्गतो रवि । कालस्य किं गच्छति याति जीवित,
तथापि लोक स्वहितं न बुध्यते ॥ १९ ॥
सुधिय स्वहितायेव, सेवन्ते सुकृत वरम् । दानशीलतपोभावभेदैरेव चतुर्विधम् ॥ ५२० ॥
चित्ततो दीयते दान, शील चित्तसमुद्भवम् । दुष्कर त न मुञ्चन्ति, ते जना स्वर्गगामिन. ॥ २१ ॥
प्राणात्ययेऽपि ये शील, न त्यजन्ति विवेकिन. । निर्वृति रत्नमालावत्, तत्प्रभावात् प्रयान्ति ते ॥२२॥

नृपोऽपृच्छत्प्रभो ! काऽसौ, रत्नमाला वराङ्गना । पालितं विषमं शीलं, यया तस्याः कथा वद ॥२३॥
तथाहि–गुरुरूचेऽत्र भरते, पृथ्वीभूषणपत्तने । जन्मेजयाभिधो राजा, राज्यं न्यायादपालयत् ॥ २४ ॥
अन्यदाऽन्येन राज्ञाऽस्य, प्रेषितो वाजिपुङ्गवः । परीक्षार्थं स्वयं राजा, तं समारोहयद्धयम् ॥ २५ ॥
विपरीतशिक्षितोऽश्वः, सोऽचलत्प्राक् शनैः शनैः । राज्ञाऽचिन्ति विना वेगं, भव्येनानेन किं फलम् ?॥२६॥
विचिन्त्यैवं क्रुधा राज्ञा, वल्गा मुक्ता कराद् यदा । तावदुच्छलितो वाजी, वायुवेगाच्चचाल च ॥ २७ ॥
काञ्चिन्महीं व्यतिक्रम्य, भीमाटव्यां स तस्थिवान् । मुक्त्वा हयं श्रमाद्भूपः, सुप्तो वृक्षतले ततः ॥ २८ ॥
तावद् व्योमनि गच्छन्त्या, वनदेवतया कया । तत्रागत्य जटीखण्डं, बबन्धे नृपमस्तके ॥ २९ ॥
तत्प्रभावेण भूपस्य, जातं श्यामतरं वपुः । क्षणाज्जागरितो राजा, स्वं कृष्णाङ्गं व्यलोकयत् ॥ ५३० ॥
गतालङ्कारसद्वस्त्रं, श्यामं वीक्ष्य वपुर्नृपः । विस्मितश्चिन्तयामास, किमिदं जातमीदृशम् ? ॥ ३१ ॥
एकाकिनो वनस्थस्य, दुःखिनो मे इदं पुनः । ज्वरे हिक्का क्षते क्षारो, दग्धोर्ध्वे स्फोटकस्तथा ॥ ३२ ॥
एतस्मिन् समये तत्र, पृष्ठे सैन्यं समागतम् । तं कृष्णं वीक्ष्य पल्लीशधिया पृष्टं च तद्भटैः ॥ ३३ ॥

रे पल्लीश ! त्वया दृष्टो, जन्मेजयनृपोऽधुना । नृपेणोक्तमरे मूढा !, मा न जानीथ स त्वहम् ॥ ३४ ॥
तैरुक्त त्व कथ कृष्णोऽलङ्कारस्तर्हि ते क च ?। राजोचे विपरीत मे, सर्व कर्म्मवशादभूत् ॥ ३५ ॥
श्रुत्वैव सैनिका प्रोचुस्त्वयेद कि प्रजल्पितम् ? । अस्माक प्रभुरीदृक्ष , कथ भवति रे शठ !॥ ३६ ॥
इत्युक्त्वा च हय नीत्वा, ते गता• स्वपुर प्रति । विच्छायवदनो भूपश्चचालैकदिश प्रति ॥ ३७ ॥
कियद्दूर गते तस्मिन्नागतास्तापसाश्रमा । तापसैस्तस्य चातिथ्यं, कृत सवीक्ष्य तद्गुणान् ॥ ३८ ॥
ततः कुलपतिर्विद्यादेवीमाराध्य युक्तित' । कारयित्वा च सामग्रीं, विधिना सह भूभुजा ॥ ३९ ॥
रत्नमालाभिधा कन्या, विवाह्य करमोचने । अस्मै विद्या ददौ प्रीत्या, युद्धे विजयकारिणीम् ॥५४०॥
युग्मम् ।

त पूर्वस्नेहयोगेन, विरूपमपि रूपिणम् । मन्यन्ती निजचित्ते सा, भर्तृभक्तिपराऽभवत् ॥ ४१ ॥
रम्यसौधे तयोः प्रीत्या, स्वेच्छया रममाणयोः । भर्तुः शीर्षावलोकार्थमुपविष्टाऽन्यदा प्रिया ॥ ४२ ॥
तदा सा मूलिका शीर्षात्, त्रुटित्वा पतिता भुवि । स्वीयरूपधरो राजा, बभूव सुभगस्तत• ॥ ४३ ॥

दिव्यरूपं पतिं वीक्ष्य, रत्नमाला मुदं दधौ । सख्या च प्रियवादिन्या, ज्ञापितस्तापसः पिता ॥ ४४ ॥
सोऽपि हृष्टो निजे चित्ते, मङ्गलध्वानिपूर्वकम् । महोत्सवं पुनश्चक्रे, तापसैश्च तदा मुदा ॥ ४५ ॥
तत्रान्यदागतः कश्चित्, खेचरः सैन्यसंयुतः। संवीक्ष्य रत्नमालां तां, हर्तुं लग्नाश्च तद्भटाः ॥ ४६ ॥
आश्रमान् पातयामासुस्तापसांश्च व्यडम्बयन् । तद्विलोक्य डुढौकेऽथ, योद्धुं जन्मेजयो नृपः ॥४७॥
तं प्रौढविक्रमं दृष्ट्वा, भग्नास्ते खेचरा भटाः । दिशोदिशं प्रनष्टाश्च, स्थितवान् मुख्यखेचरः ॥ ४८ ॥
उभाभ्यां युद्धमारेभे, दिव्यास्त्रेण परस्परम् । युद्ध्यमानेन राज्ञाऽथ, खेचरो हेलया जितः ॥ ४९ ॥
न्यायधर्म्मे जयो ज्ञेयो, नान्यायेन जयो भवेत् । अदृष्टीभूय विद्याभृत्, स गतः क्वापि तत्क्षणात् ॥५५०॥
तदाकाशात्पुष्पवृष्टिः, कृता देवैर्नृपोपरि । जन्मेजयनृपेणाहो, जितमेवञ्च भाषितम् ॥ ५१ ॥
ततो विशेषतो रत्नमाला स्नेहं नृपोपरि । दधती मुदिता भोगान्, भुनक्ति स्म यदृच्छया ॥ ५२ ॥
अथान्यदा शरत्काले, राजा राज्ञीयुतो वने । गत्वा विविधक्रीडाभी, रमते स्म स्मरोपमः ॥ ५३ ॥
इतश्च पूर्वरोषेण, तेन विद्याधरेण खे । उत्पाट्य कन्दरायां द्राक्, तौ मुक्तौ क्वापि दम्पती ॥ ५४ ॥

अचिन्तयत्तदा राजा, ममाहो कर्म्म दुस्तरम् । प्राक्तनं विद्यते येन, भवे दुःख पुन. पुन. ॥ ५५ ॥
अत्रानीय विमुक्तोऽह, सप्रियः केन वैरिणा ?। न ज्ञायते गत क्वासौ, तर्हि कि कस्य कथ्यते ? ॥ ५६ ॥
तावत्तृषातुरा रत्नमाला ब्रूते स्म मे प्रभो ? । पाययानीय पानीयं, जन्तुस्तिष्ठेन्न तद्विना ॥ ५७ ॥
निर्गतौ कन्दरायास्तौ, सहकारतरोरध । सस्थाप्य स्वप्रिया राजा, पानीयार्थं वनेऽभ्रमत् ॥ ५८ ॥
यावज्जल गृहीत्वा स, आगतो नरनायक । न ददर्श प्रिया तावत्, सा हृता तेन वैरिणा ॥ ५९ ॥
विललाप ततो भूपो, मा मुक्त्वा क्व गता प्रिये ? । किङ्करोमि क्व गच्छामि, विरह ते कथ सहे ? ॥५६०॥
शून्यचित्तो नृपोऽरण्ये, भ्रमन् नृप क्वचित् क्वचित् । तत्र शून्य पुर दृष्ट, प्रतोलीदुर्गमण्डितम् ॥६१॥
गतो मध्ये नृपस्तत्र, पश्यन् दग्धगृहावलीम् । दृष्ट्वा क्वचिन्नृपावासाश्चटितश्चैकमान्दिरे ॥ ६२ ॥
अपश्यत्तत्र शय्याधिरूढामेकाञ्च बालिकाम् । क्षामोदरी सुरूपाञ्च, दृष्ट्वा ता नृपतिर्जगौ ॥ ६३ ॥
कथमेकाकिनी भद्रे !, शून्यञ्च किमिद पुरम् ?। तद् ब्रूहि श्रोतुमिच्छामि, साऽब्रवीत् शृणु सत्तम ! ॥६४॥
प्रसिद्धाऽस्ति महीपीठे, कोशाम्बीति पुरीवरा । तत्र कुशध्वजो राजा, पुष्पमालेति तत्प्रिया ॥ ६५ ॥

सूरवीरावुभौ पुत्रौ, तयोः सौभाग्यशालिनौ । पुत्री च रत्नमालैका, जयमाला तथाऽपरा ॥ ६६ ॥
वार्धके नृपतिर्दीक्षा, गृहीत्वाऽगात् शिवालयम् । राज्यार्थं भ्रातरौ तौ द्वावन्योऽन्यं योद्धुमुत्थितौ ॥ ६७ ॥
तं विरोधं परिज्ञाय, धात्र्याऽथ हेममालया । रत्नमाला सुता नीत्वा, विमुक्ता तापसाश्रमे ॥ ६८ ॥
पुत्रवत् पालिता साऽथ, रत्नसिंहतपस्विना । अत्र रत्नपुरे चाहमानीता जयमालिका ॥ ६९ ॥
चन्द्रकेतुनरेन्द्रस्य, मातुलस्य ममैव च । अर्पिताऽहं ततस्तेन, पुत्रीवत्परिपालिता ॥ ५७० ॥
सखीभिः सह क्रीडन्ती, गवाक्षस्थाऽहमन्यदा । दृष्टा कपालिना केन, याचिता मातुलान्तिके ॥ ७१ ॥
नाऽर्पिताऽहं स दूमित्वा, राज्ञा निर्वासितः पुरात् । तेन विद्याबलेनाथ, चन्द्रकेतुर्हतः क्रुधा ॥ ७२ ॥
भस्मीकृत्य पुरञ्चापि, कृतं शून्यं दुरात्मना । अहन्तु स्थापिताऽत्रैका, पूर्वलोभेन पापिना ॥ ७३ ॥
इत्युक्त्वा सा पुनः प्रोचे, शृणु साहसिकाग्रणीः । तस्यागमनवेलैषा, सञ्जाता त्वं व्रज क्वचित् ॥ ७४ ॥
स निघृष्टो महादुष्टस्त्वा मुग्धं मारयिष्यति । अतः कारणतो याहि, जीवन् भद्राणि पश्यति ॥७५ ॥
राजा तं योगिनं द्रष्टुं, स्थितो निर्माल्यमध्यगः । इतश्चाकाशमार्गे द्राग्, जाता डमरकध्वनिः ॥७६॥

रौद्ररूप. स रक्ताक्ष·, कन्थादण्डायुधावृत । एका नारी करे धृत्वा, योगी तत्र समागत ॥ ७७ ॥
कपाली स करालाक्षो, निविष्टो वेदिकोपरि । अग्रे सस्थाप्य ता बालामिद वचनमब्रवीत् ॥ ७८ ॥
हे भद्रे ! तव भर्त्ता स, जलार्थ यावता गत । तावत्त्वं निद्रया सुप्ता, कोमले पर्णसस्तरे ॥ ७९ ॥
तदा विद्याधरेणैत्य, रागादमिततेजसा। त्व हृताऽथ मया तस्य, सकाशान्मोचिता बलात् ॥ ५८० ॥
अत्रानीता च हे सुभ्रु!, यदि तस्य विडम्बनात् । निष्कासिता ततो भोगान्, भुज्यता मयका सह ॥८१॥
न मन्यसे यदि त्व मा, तर्हि त्वा मारयाम्यहम् । श्रुत्वैव वनिता समाह, शृणु रे पाप ! दुष्टधीः॥८२॥
निश्चला मेरुचूलापि, कदा चलति भूतले । परं प्राणात्यये नैव, शीलमुल्लङ्घयाम्यहम् ॥ ८३ ॥
इत्थ महाग्रह ज्ञात्वा, योगी खड्गमनर्त्तयत् । तदा तस्या स्वर श्रुत्वा, राज्ञा ज्ञाता निजप्रिया॥८४॥
महाक्रोधस्ततो भूपो, गुहाया इव केसरी । निर्माल्यात्प्रकटीभूत , प्रियापीडा सहेत क· ? ॥ ८५ ॥
यत –सद्यो लक्ष्मीप्रियाधान्याऽपहारे सति मानवा । भवन्ति दु खिनोऽत्यन्त, चित्ते नूनमनारतम् ॥८६॥
रे पापिष्ठ ! किमारब्धमुत्तिष्ठ मम समुख । इत्युक्त्वा भूभुजा खड्गघातात् योगी द्विधाकृत· ॥ ८७ ॥

अन्यायकारिणो वृद्धिं, यदि यान्ति महीतले । तदा लोकः कथं वेत्ति, ह्यन्तरं पुण्यपापयोः ? ॥८८॥
अथ सा जयमालापि, सहर्षाऽऽगत्य सत्वरम् । भगिनीं रत्नमाला तामालिङ्ग्य प्रणनाम च ॥ ८९ ॥
स्वस्ववृत्तं यथाभूतं, ताभ्यामुक्तं परस्परम् । जयमालाऽथ भूपस्योद्वाहिता रत्नमालया ॥ ८९० ॥
रतिप्रीतिसमानाभ्यां, ताभ्यां सार्धं स भूमिपः । कन्दर्प इव सद्भोगान्, भुञ्जानोऽत्र स्थितः कियत् ॥९१॥
चचाल सप्रियो भूपः, पश्चात्पूर्वदिशं प्रति । कस्मिन् केलिवने गत्वा, विशश्राम क्षुधातुरः ॥ ९२ ॥
स्त्रीयुग्मे शयिते राजा, फलार्थी कानने गतः । यावत्फलानि लात्वा स, आगतो नरनायकः ॥ ९३ ॥
तावद् ददर्श नो सुप्तां, रत्नमालां निजप्रियाम् । प्रबुद्धा जयमालाऽथ, पृष्टा राज्ञा क्व ते स्वसा ? ॥९४॥
सोचे देव ! विजानामि, नाहं निद्रावशं गता । राजोचे हा कथं भार्यावियोगो मे पुनः पुनः ? ॥९५॥
मुक्त्वाऽथ कुत्र सुस्थाने, जयमालां महीपतिः । विरहार्त्तः स्वप्रियायै, स्वयं बभ्राम मेदिनीम् ॥ ९६ ॥
भ्रामं भ्रामं महीपीठे, वनेऽगान् मलयाभिधे । तन्मध्ये च महोत्तुङ्गं, ददर्श श्रीजिनालयम् ॥ ९७ ॥
तत् दृष्ट्वा तत्र सोत्साहश्चैत्यमध्ये नृपो गतः । तत्र भक्त्या युगादीशप्रतिमा तेन वन्दिता ॥ ९८ ॥

एतस्मिन्समये कोऽपि, व्योम्नो गरुडवाहन । आगत खेचरस्तत्र, ववन्दे च जिनेश्वरम् ॥ ९९ ॥
जिनस्नात्र विधायाथ, स्नात्रनीरेण कुम्पकम् । भृत्वा च मण्डपे सोऽगात्, राजा नत्वा पप्रच्छ तम् ॥६००॥
किमर्थं गृह्यते नीरं, कोऽसि त्व कुत आगत. । युवत्या वसन चेतत्, स्कन्धे ते वर्त्तते कथम् ? ॥ १ ॥
जगाद खेचर सोऽपि, शृणु साधर्म्मिकोत्तम ! । ममैता सकला वार्त्ता, वदामि तव मूलत ॥ २ ॥
वैताढ्येऽस्त्युत्तरश्रेण्या, रत्नचूडो धराधिप. । तद्भ्राता मणिचूडोऽह, सदा स्नेहभरान्वित ॥ ३ ॥
कर्म्मयोगेन मद्भ्रातुर्जातो दाहज्वरो महान् । एतत्स्नात्रजलेनाशु, यान्ति रोगा ज्वरादय ॥ ४ ॥
जलायागच्छता मार्गे, जन्मेजयनृपप्रिया । मया दृष्टा खेचरेणापहृताऽमिततेजसा ॥ ५ ॥
सा सती वचन तस्य, भोगार्थं नैव मन्यते । कामान्धो वहुधा सोऽपि, विडम्बयति ता तत ॥ ६ ॥
मयाऽनेकप्रकारेण, वोधितोऽपि न वुध्यते । स नो मुञ्चति दुष्टात्मा, ता राज्ञीं शीलशालिनीम् ॥ ७ ॥
रुदन्त्या पथि गच्छन्त्यास्तस्या वस्त्र पपात च । तद्गृहीत्वाऽधुनाऽत्राहमागतो हे नरोत्तम ! ॥ ८ ॥
ततो नृपेण वृत्त स्व, खेचराय निवेदितम् । जन्मेजयनृप ज्ञात्वा, तस्मै वस्त्र तदर्पितम् ॥ ९ ॥

पुनः प्रोचे नृपो मित्र !, दृश्यसे त्वं नरोत्तमः । साहाय्यं कुरु मे राज्ञीप्रत्यानयनहेतवे ॥ ६१० ॥
प्रतिपद्य वचो राज्ञः, खेचरो भूपसंयुतः । वैताढ्याद्रौ गतः शीघ्रं, दूतत्वे प्रेषितो नरः ॥ ११ ॥
विज्ञप्तोऽमिततेजाः स, गत्वा दूतेन हे प्रभो ! । जन्मेजयप्रियां मुञ्च, तद्विरोधान्न ते शुभम् ॥ १२ ॥
श्रुत्वैवं कोपवान् सोऽपि, स्माह दूतं प्रति स्फुटम् । रे प्रत्यर्पयितुं तस्य, किमानीताऽस्ति सा मया? ॥ १३ ॥
वारं वारं हृताप्यद्य, चटिता साऽस्ति मत्करे । दूतेनाथ स्वरूपं तद्, गत्वा भूपस्य भाषितम् ॥ १४ ॥
मेलितान्यथ सैन्यानि, खेचरयोर्द्वयोरपि । रामरावणवज्जातं, तयोर्युद्धं जयार्थिनोः ॥ १५ ॥
मित्रखेचरसांनिध्याद्राज्ञीशीलप्रभावतः । षण्मासैर्भूभुजा जिग्ये, दिव्यास्त्रैः शत्रुखेचरः ॥ १६ ॥
रत्नमालां गृहीत्वाऽथ, मित्रेण सह भूपतिः । आदाय जयमालां च, स प्राप नगरं निजम् ॥ १७ ॥
सहर्षाः सचिवाः सर्वे, स्वजनाश्च प्रजा अपि । आगताः सम्मुखा राज्ञो, मिलिता नतिपूर्वकम् ॥ १८ ॥
पृच्छन्ति स्म प्रजाः स्वामिन् !, किं तेऽभूदिन्द्रजालवत् । हयाकृष्टादिसंबन्धो, नृपेणोक्तो निजस्ततः ॥ १९ ॥
राज्ञा पृष्टः पुनर्मन्त्री, मां विना राज्यरक्षणम् । कथं कृतं ततो मन्त्री, प्रोवाच शृणु भूपते ! ॥ ६२० ॥

नैमित्तिको मया पृष्ट, तेनेद कथित वच । वर्षैर्द्वादशभि पूर्णैरायास्यति तव प्रभु ॥ २१ ॥
त्वत्पदेऽथ मया यक्ष, स्थापित प्रतिमामय । पूर्व्वभक्तिवशात्स्वामिस्तवाज्ञा न च खण्डिता॥ २२ ॥
महोत्सवेन भूपाल, प्रविवेश पुरान्तरे । खेचर वालयित्वाथ, राज्यभारं वभार च ॥ २३ ॥
क्रमेण रत्नमालाया, सुतश्चन्द्रोदयाभिध । अभवत् पुण्ययोगेन, ववृधे स च लीलया ॥ २४ ॥
अथान्येद्यु पुरोद्याने, ज्ञानी सूरि समागत । वन्दनाय गतो राजा, तत्रान्त·पुरसयुत ॥ २५ ॥
तिस्र·प्रदक्षिणा दत्त्वा, गुरु नत्वोपविश्य च । श्रुत्वा सद्देशना प्रान्ते, भूपोऽवादीत्कृताञ्जलि ॥ २६ ॥
गुरो! मे कर्म्मणा केन, दु·ख द्वादशवार्षिकम् । पुनः पुनर्वियोगश्च, सप्राप्तो रत्नमालया ? ॥ २७ ॥
सूरि प्रोवाच भो भूप!, शालिग्रामे पुराऽभवत् । अनेकगोकुलस्वामी, भद्रनामा कृषीवल· ॥ २८ ॥
तत्प्रिया रुक्मिणीनाम्नी, मिथो द्वौ प्रीतिशालिनौ । शरत्कालेऽन्यदा शालिरक्षणार्थं च तौ गतो ॥२९॥
ताभ्या केदारमध्येऽथ, हसो हसीयुतो वर । क्रीडन्निजेच्छया दृष्टो, लालयन्नपि चार्भकान् ॥ ६३० ॥
गृहीत्वा राजहसी सा, दत्ता भर्त्रा प्रियाकरे । विनोदात् कुङ्कुमैर्लिप्त्वा, तया मुक्ताऽथ पक्षिणी ॥३१॥

रक्तवर्णा ततो हंसी, हंसो नैवोप लक्ष्ययेत् (क्ष्य ताम्) । दृष्ट्वा दृष्ट्वा पुनर्याति, पुनरायाति मोहतः ॥ ३२॥
न रमेत स्पृशेन्नैव, हंसो हंसीं मनागपि । भ्रामं भ्रामं ततः पक्षी, महाखेदमवाप सः ॥ ३३ ॥
ईदृशो द्वादशघटीमानोऽभूद्विरहस्तयोः । एवं दृष्ट्वाऽथ रुक्मिणया, मुक्ता प्रक्षाल्य पक्षिणी ॥ ३४ ॥
तदोपलक्ष्य हंसोऽसौ, प्रियाया मिलितो मुदा । एवं ताभ्यामन्तरायकर्म्माशुभमुपार्जितम् ॥ ३५ ॥
भद्रजीवोऽथ दानादिपुण्याज्जातो भवान्नृपः । रुक्मिणी शीलधर्म्मेण, सञ्जाता रत्नमालिका ॥ ३६ ॥
हंसजीवो भवं भ्रान्त्वाऽमिततेजा बभूव सः । हंसी सा वनदेवी च, सञ्जाता शुभकर्म्मतः ॥ ३७ ॥
अश्वाकृष्टो यदा सुप्तो, वने त्वं पूर्वमत्सरात् । जटीबन्धात्कृतः श्यामो, वनदेव्या तया तदा ॥ ३८ ॥
वारं वारं हृता राज्ञी, यत्तेनामिततेजसा । सन्तापितः पूर्वभवे, हंसस्तत्कर्मजं फलम् ॥ ३९ ॥
प्राग्द्वादशघटीमानो, वियोगः पक्षिणोः कृतः । भुक्तं द्वादशवर्षेषु, युवाभ्यां विरहासुखम् ॥ ६४० ॥
पुरातनं हि यत्कर्म्म, शुभं वाप्यशुभं भवेत् । जन्मकोट्यां गतायां तद्भोक्तव्यं नान्यथा भवेत् ॥ ४१ ॥
यतः—हसन्तो हेलया जीवाः, कर्म्मबन्धं प्रकुर्वते । तद्विपाको हि कायेषु, रुदद्भिरपि भुज्यते ॥ ४२ ॥

इत्थ पूर्वभव श्रुत्वा, फल चाप्यल्पकर्म्मण । जन्मेजयनृपो बुद्धो, वैराग्य प्राप सप्रिय ॥ ४३ ॥
चन्द्रोदयसुत राज्ये, निवेश्याथ स भूपति । प्रियायुग्मयुतो दीक्षा, जग्राह ज्ञानिनोऽन्तिके ॥ ४४ ॥
इतश्चासिततेजा स, मृत्वाऽऽर्त्तध्यानतत्पर । वने क्वापि प्रचण्डोऽभूत्, षण्डस्ताहृशकर्म्मत ॥ ४५ ॥
गतोऽन्यदा वने तत्र, जन्मेजयमुनीश्वर । कायोत्सर्गे स्थितस्तत्र, कृत्वा सुस्थिरमानसम् ॥ ४६ ॥
भ्रमस्तत्रागत शण्डो, दृष्ट्वा त सुस्थित मुनिम् । दधावे पूर्ववैरेण, शृङ्गघातैर्हतो मुनि ॥ ४७ ॥
पुन पादैर्हन्यमान, आत्मान स मुनीश्वर । अध्यासयति शान्तात्मा, न चचाल मनागपि ॥ ४८ ॥
उपसर्गान्सहन् जज्ञे, सोऽन्तकृत् केवली क्षणात् । पूरयित्वा तदा स्वायुर्जगाम परम पदम् ॥ ४९ ॥
वृष सिंहहतो मृत्वा, तत्पापान्नरके ययौ । पुनस्तिर्यङ् नारकश्चेत्यभ्रमत् सुचिर भवे ॥ ६५० ॥
साध्वी तु रत्नमाला सा, जयमालासमन्विता । चिरं सम्पाल्य चारित्र, स्वर्गलोक गता तत ॥ ५१ ॥
अवतीर्य विदेहेऽथ, तीर्थङ्करकरेण ते । उभे अपि व्रत प्राप्य, प्रापतुर्मोक्षमक्षयम् ॥ ५२ ॥
सङ्कटेऽपि यथा शील, पालित रत्नमालया । अन्यैरपि तथा पाल्य, निर्म्मल मोक्षकाङ्क्षिभि ॥ ५३ ॥

देशनान्ते गुरुं नत्वा, रत्नपालो वदत्प्रभो ! । यद् यत् कर्म्मस्वरूपं तु, पृच्छामि वद तत्तथा ॥ ५४ ॥
कथं मे बलिनो राज्यं, गृहीतं जयमन्त्रिणा ? । कदर्थिता जयेनैव, कथं शृङ्गारसुन्दरी ? ॥ ५५ ॥
कर्म्मणा केन राज्यं तद्, गतं लब्धं पुनर्मया । सर्वकार्यकरो लब्धो, दुर्लभोऽपि कथं रसः ? ॥ ५६ ॥
पीडिता कुष्ठरोगेण, कथं कनकमञ्जरी । केन कर्म्मविपाकेन, जातान्धा गुणमञ्जरी ? ॥ ५७ ॥
कथं तयोर्द्वयोर्देव !, गुणो जातोऽल्पयोगतः । एवं पुरातनं कर्म्म, सर्वेषां ब्रूहि केवलिन् ! ॥ ५८ ॥
केवली स्माह हे राजन्नत्रैव भरताभिधे । क्षेत्रे रत्नपुरे पूर्वं, रत्नवीरो नृपोऽभवत् ॥ ५९ ॥
श्रीदेवीप्रमुखास्तस्य, नव राज्योऽभवन् वराः । तत्पुरे वणिजौ सिध्धधनदत्ताभिधावुभौ ॥ ६६० ॥
अदत्तयोगतस्तौ द्वौ, जातौ दारिद्र्यपीडितौ । श्रूयते जनगीरेवं, नादत्तमुपतिष्ठति ॥ ६१ ॥
ताभ्यां प्रोक्तं मिथोऽन्येद्युर्धनार्थं कश्चिदुद्यमः । क्रियते येन सद्भाग्याभाग्ययोर्लभ्यतेऽन्तरम् ॥ ६२ ॥
काचिद्देवी ततस्ताभ्यामाराध्धा शुभभावतः । विंशत्याऽथोपवासैः सा, प्रत्यक्षा देवताऽभवत् ॥ ६३ ॥
प्रोचे सैवमहो वत्सौ !, द्वयोर्लक्ष्मीविवेकयोः । मध्ये याच्यं विमृश्यैकं, द्वयं नैव प्रदीयते ॥ ६४ ॥

सिध्धदत्तोऽथ लक्ष्मीं च, विवेक धनदत्तक । ययाचे तद्वर दत्त्वा, तयोर्देवी तिरोदधे ॥ ६५ ॥
अथैव सिद्धदत्तस्य, निर्विवेका रमाऽभवत् । विवेको धनदत्तस्य, भाजन सर्वसपदाम् ॥ ६६ ॥
अन्यदा सिध्धदत्तस्य, कश्चित्कापालिको गृहे । आयात. सति मध्याह्ने, भक्त्या तेन स भोजित. ॥६७॥
तुष्टेन तेन त्रपुपीफलानि कति योगिना । दत्तानि सिद्धदत्ताय, मन्त्रितानि सुमन्त्रत ॥ ६८ ॥
उक्त चैतानि वप्तानि, प्ररोहन्ति घटीद्वये । तद्वल्ली यत्नयोगेन, मण्डपेऽथ चटाप्यते ॥ ६९ ॥
तत्त पुष्पफलान्यस्या , सुधारससमानि वै । भक्षितानि क्षुधा तृष्णा, सर्व्वपीडा हरन्त्यहो ! ॥ ६७० ॥
वाताश्चतुरशीति षट्सप्ततिर्नेत्रजा रुजा । अष्टादशापि कुष्ठानि, सन्निपातास्त्रयोदश ॥ ७१ ॥
शाम्यन्ति फलमाहात्म्याद्विषे स्थावरजङ्गमे । इत्युदीर्य गतो योगी, सिद्धदत्तो व्यचिन्तयत् ॥ ७२ ॥
अहो ! मयाऽद्य लब्धानि, फलान्येतानि भाग्यत । उप्त च विधिना तेन, फल तत्फलित क्षणात् ॥७३॥
हर्षेण सिद्धदत्तेन, शब्दोऽथो पातित पुरे । अहो ! ये व्याधिता लोका , सर्वेऽप्यायन्तु मद्गृहे ॥ ७४ ॥
द्रव्य शतसहस्रादि, यथायोग स लोभत । पूर्व्वमादाय दत्तेऽथ, फलान्येतानि रोगिणाम् ॥ ७५ ॥

फलेषु सेव्यमानेषु, नीरोगा अभवन् जनाः । सिद्धदत्तोऽपि तद्द्रव्यैरजायत महर्द्धिकः ॥ ७६ ॥
अन्यदा सिद्धदत्तोऽसौ, धनलोभे प्रवर्धिते । परद्वीपं गतो वार्द्धौ, पोतं संपूर्य वस्तुभिः ॥ ७७ ॥
तत्स्थानाद्वलिते तस्मिन्, यानपात्रं कुवायुना । प्रेरितं चाब्धिकल्लोलैः, पताकावन्ननर्त्त तत् ॥ ७८ ॥
तदा क्रयाणकान्यब्धौ, लोकैः क्षिप्तानि भूरिशः । लघुत्वेन ततः पोतः, शून्यद्वीपे ययौ रयात् ॥७९॥
पोतादुत्तीर्य लोकास्ते, तस्मिन्द्वीपे स्थितास्तटे । त्रपुषी सिद्धदत्तेन, उप्ता धान्यक्षये सति ॥ ६८० ॥
उद्गता फलिता वल्ली, तृप्ता जाता नराः फलैः । फलास्वादनतोऽप्यग्रे, बभूवुः सुखिनो जनाः ॥ ८१ ॥
अन्येद्युरागता वार्द्धेस्तत्रैका जलमानुषी । वारिता सिद्धदत्तेन, खादन्ती त्रपुषीफलम् ॥ ८२ ॥
रत्नमेकं करे धृत्वा, तेन तस्याः प्रदर्शितम् । तदा साऽचिन्तयन्नूनमेष रत्नानि याचते ॥ ८३ ॥
ध्यात्वेति वेगतः पश्चाद्, गता सा जलमानुषी । समुद्राद्रत्नमानीय, सिद्धदत्ताय चार्प्पयत् ॥ ८४ ॥
यावन्मात्राणि रत्नानि, सिद्धदत्ताय सा ददौ । तावन्मात्रफलान्येष, तस्यै दत्ते स्म सर्वदः ॥ ८५ ॥
बहुकालेन सिद्धेन, रत्नराशिः कृतो भृशम् । पोते क्षिप्त्वा स रत्नानि, क्रमादागात्पुरे निजे ॥ ८६ ॥

इतश्च रत्नलोभेन, रत्नवीरेण भूभुजा । निजाज्ञा दापिता यानपात्रे द्वादश वासरान् ॥ ८७ ॥
न्याय धृत्वा स्वय चित्ते, त्रयोदशदिने नृप । शुल्क नीत्वाऽमुचत्पोत, सिद्धदत्तो जहर्ष च ॥ ८८ ॥
षट्पष्टिर्हेमकोटीना, स्वामी जातः सुरीवरात् । पर स निर्विवेकत्वात्, कस्य किञ्चिन्न मन्यते ॥८९॥
यत –कुवशपतितो राजा, मूर्खपुत्रो हि पण्डित । निर्धनेन धन प्राप्त, तृणवत् मन्यते जगत् ॥६९०॥
यत –श्रुतवागदृष्टिहरण, करोति लक्ष्मीर्नरस्य को दोष ? ।
गरलसहोदरजाता, आश्चर्यं यन्न मारयति ॥ ९१ ॥
मेलापके न मिलति, नोपकार करोति च । श्रीमत्स्वजनमध्येऽपि, नाऽऽयाति स्वमदेन स ॥ ९२ ॥
न देवे न गुरौ चापि, न धर्म्मे न कुटुम्बके । व्ययति स्म निर्विवेकात्, काणामपि कपर्दिकाम् ॥९३॥
कदर्यभावतस्तस्मिन्, द्वेषी जातो जनोऽखिल । महाजने धनान्धोति, ख्यातिरेतस्य विस्तृता ॥ ९४ ॥
स्वगर्ववशतो मूढो, जानाति स्म न किञ्चन । पशुवन्निर्विवेकी स, केवल धनमार्जयत् ॥ ९५ ॥
तदाऽन्यो धनदत्तोऽपि, देवीवरमवाप्य तम् । तस्य प्रभावत सम्यक्, सञ्जात सुविवेकवान् ॥९६ ॥

यतः—भक्त्या देवगुरून् सदा नमति यो दानं च दत्ते मुदा,
नो हिंसां कुरुते न जल्पति मृषा गृह्णात्यदत्तं न च ।
अन्यस्त्रीमपवर्जयेद्वहति नो गर्वं न निन्देत्परं ,
शुद्धात्मा धनदत्त एष विनयी दक्षोऽल्पलोभः क्षमी ॥ ९७ ॥

विवेकी धनदत्तोऽसौ, मिलिते श्रीमहाजने । आकार्यते वचस्तस्य, हितं सर्वोऽपि मन्यते ॥ ९८ ॥
अन्यदा तत्पुरे कश्चिदागाद्वैदेशिको वणिक् । रोगार्त्तः स मठे सुप्तस्तस्य शुश्रूषको न कः ॥ ९९ ॥
यस्मिन् ग्रामे पुरे वापि, नात्मीयः कोऽपि संवसेत् । क्षणं हि तत्र न स्थेयं, सुधीभिः शुभकाङ्क्षिभिः॥७००॥
अनाथं तं नरं वीक्ष्य, धनदत्तः स्वशक्तितः । चकार तस्य शुश्रूषां, कर्म्मतः स मृतः परम् ॥ १ ॥
ततस्तद्देहसंस्कारकृते संमिलिते जने । आहूतः सिद्धदत्तः सः, नागतो मदभारितः ॥ २ ॥
ततो वैदेशिकं मर्त्यं, मृतमुत्पाट्य वेगतः । श्मशाने वणिजो जग्मुस्तैस्तत्र रचिता चिता ॥ ३ ॥
परमज्ञातगोत्रत्वाद्, दत्तेऽग्निं तस्य कोऽपि न । स्पर्धया वह्निदाने ते, विवदन्ते परस्परम् ॥ ४ ॥

स्वभावोऽय हि लोकाना, येह साधर्म्मिणी क्रिया । ता गाम्भीर्यंगुण धृत्वा, स्वयमेक करोति न ॥५॥
ते सर्व्वैरपि सम्भूय, धनदत्तस्य भापितम् । त्वं मुञ्चाग्नि स मेने तज्जना दूरेऽथ ते स्थिता ॥ ६ ॥
धनोऽथ वह्निदानाय, शववस्त्रमपाकरोत् । वस्त्रे ग्रन्थि तदा दृष्ट्वा, छोटयित्वा व्यलोकयत् ॥ ७ ॥
दृष्टानि पञ्च रत्नानि, वहूमूल्यानि तान्यथ । विवेकात्परकीयानि, नादत्तान्यग्रहीदसौ ॥ ८ ॥
महाजनस्य तेनापि, गृहीत्वा दर्शितानि च । तस्य निर्लोभता ज्ञात्वा, ते सर्व्वेऽपि चमत्कृता ॥९॥
ते सर्व्वे वणिजस्तुष्टास्त प्रत्येव वभापिरे । अस्माभिस्तव दत्तानि, रत्नानि त्व गृहाण भो· ! ॥७१०॥
श्रुत्वैव धनदत्तोऽपि, प्रत्युत्तरमुवाच स । अनाथ यद्भवेद्द्रव्यं, तस्य स्वामी नृपो भवेत् ॥ ११ ॥
भवेयुर्गोत्रिण केऽपि, वैदेशिकनरस्य वा । तेषा हि रत्नसवन्धो, नाह गृह्णाम्यमूनि तत् ॥ १२ ॥
तेन वस्त्रे ततो वध्वा, तानि मुक्तानि भूपरि । कृत्वाऽथ शवसस्कार, स्वस्वगेहे जना गता ॥ १३ ॥
धनदत्तोऽपि रत्नानि, गृहीत्वाऽऽगत्य च द्रुतम् । उक्त्वा सर्वं च सम्वन्ध, भूपतेरतान्यढौकयत् ॥१४॥
राजा जगाद हे भद्र !, त्वया शुश्रूषितो नर· । तद्रत्नानि गृहाण त्व, यद्वा लव्धानि भाग्यतः ॥ १५ ॥

अत्याग्रहेण भूपेन, प्रदत्तं रत्नपञ्चकम् । तेन नीत्वा च विक्रीय, कृताः षट्कोटिटङ्ककाः ॥ १६ ॥
धनदत्तेन तद्द्रव्यैर्व्यवसायं चिकीर्षुणा । प्राक् स्वपुण्यमपुण्यं वा, विलोकयितुमीप्सितम् ॥ १७ ॥
स्वकीया दिवसा रम्या, अरम्याः सन्ति वाऽधुना । स्वल्पस्वल्पेन कार्येण, परीक्षामिति स व्यधात् ॥१८॥
स्वल्पाहारं स जग्राह, तथाप्यासीदजीर्णता । अल्पोच्चात्पतितस्यास्य, देहपीडा घनाऽभवत् ॥ १९ ॥
स्वल्पक्रयाणके क्रीते, हानिर्जाता च विक्रये । एका च्छागी बहिर्मुक्ता, भक्षिता सा वृकेण च ॥७२०॥
एवं दिने दिने चापि, कृतं तेन परीक्षणम् । विपरीतेऽथ सञ्जाते, दिना ज्ञाताश्च मध्यमाः ॥ २१ ॥
स्वदिनं मध्यमं ज्ञात्वा, स्वस्थीभूतः कियद्दिनान् । व्यवसायं न चक्रे स, चक्रे धर्म्मं विशेषतः ॥२२॥
कियत्यथ गते काले, धनदत्तेन धीमता । प्राग्वद्दिनपरीक्षार्थमेका क्रीता त्वजाऽन्यदा ॥ २३ ॥
प्रसूता तद्दिने युग्मं, ततोऽभूत्त्रिकमेकतः । तद्दिनात् यत्स जग्राह, तत्सर्व्वं त्रिगुणं ह्यभूत् ॥ २४ ॥
इत्थं शुभदिनं ज्ञात्वा, धनदत्तो विवेकतः । ततो वाणिज्यमारेभे, सुमुहूर्त्ते स्वशक्तितः ॥ २५ ॥
तदा देशान्तरायातसार्थतः प्रथमे दिने । पञ्चकोटिसुवर्णेन, क्रीतं सर्व्वं क्रयाणकम् ॥ २६ ॥

तत्राथ सप्तमदिने, वणिक् कोऽप्यन्यमन्दिरात् । आगतस्तेन तद्वस्तु, नीत द्विगुणमूल्यत ॥ २७ ॥
इत्थं दिने दिने तस्य, वृद्धिर्वाणिज्यतोऽभवत् । स्वल्पैरेव दिनै पूर्णा, अस्याष्टादश कोटय ॥ २८ ॥
एव विवेकतो जातो, धनदत्तो महाधनी । महादानेन लोके च, कल्पशाखीव विश्रुत ॥ २९ ॥
अन्यदा सिद्धदत्त स, धनदत्तेन सयुत । व्रजन् राजपथेऽपश्यत्, कलि भूपतिपुत्रयो ॥ ७३० ॥
नृपपुत्रौ वृद्धलघू, विवदन्तौ परस्परम् । विलोक्य धनदत्तोऽगादन्यमार्गे विवेकत ॥ ३१ ॥
सिद्धदत्तस्तु तत्पृष्ठे, लग्नो गच्छन् विनोदत । ताभ्या साक्षीकृतो वादे, स चानीतो नृपान्तिके ॥३२॥
राज्ञा पृष्ट स पुत्राभ्या, त्वं हि साक्षीकृतोऽसि रे । वद भो न्यायमन्यायमेतयोरथ सोऽब्रवीत् ॥३३॥
स्वामिस्ते वृद्धपुत्रोऽयमुत्कटो वर्त्तते महान् । लघुस्तु बालभावत्वाद्, यद्वा तद्वा वदेद् वृथा ॥ ३४ ॥
अविवेकेन तेनेद, प्रोक्त राजसभान्तरे । तच्छलं प्राप्य राज्ञाऽस्य, नीता विंशतिकोटय ॥ ३५ ॥
द्वेपतस्तस्य केनापि, पक्षपातोऽपि नो कृत । धनदत्त. सुखीजात , प्रस्तावज्ञो विवेकवान् ॥ ३६ ॥
एकदा तावुभौ मन्त्रिसौधस्याधस्तु जग्मतुः । गवाक्षस्थितया दृष्टौ, मन्त्रिपत्न्या रतिस्त्रिया ॥ ३७ ॥

रूपवन्तौ युवानौ च, तौ दृष्ट्वा मृगलोचना । सरागत्वेन वीक्षन्ती, सा धनेनोपलक्षिता ॥ ३८ ॥
तदार्कबिम्बवत्सर्प्पवत् कुत्सितवस्तुवत् । शत्रुवद्धनदत्तेन, सा पुनर्नैव वीक्षिता ॥ ३९ ॥
ततो जितेन्द्रियत्वाच्च, स कुलमालिन्यभीतितः । व्रतभङ्गाद्विवेकाच्चागच्छदाकृष्य चक्षुषी ॥ ७४० ॥
सिद्धदत्तो निर्विवेकी, तामसतीं पुनः पुनः । आलोकयत्सरागत्वाद्व्रजन् वालितकन्धरः ॥ ४१ ॥
तत्प्रेक्षारक्षकनरैर्धृत्वा दत्तो नृपस्य सः । तमन्यायकरं कृत्वा, गृहीता दशकोटयः ॥ ४२ ॥
तस्मिन्पुरेऽन्यदा कश्चिदागाच्चौरस्तदन्तिके । सपादकोटिमूल्यानि, दश रत्नानि सन्ति च ॥ ४३ ॥
एकान्ते धनदत्तस्य, दर्शयित्वाऽथ तानि सः । प्रोचे द्रम्मसहस्रेण, तवैकैकं ददामि भोः ! ॥ ४४ ॥
श्रुत्वैवं वणिजाऽचिन्ति, बहुमूल्यान्यमून्यसौ । मूर्खो दत्तेऽल्पमूल्येन, गृहीतुं मे न युज्यते ॥ ४५ ॥
अयं विभाव्यते चौरो, हृतान्येतानि कस्यचित् । बहुलाभेऽप्यलाभोऽयं, विचिन्त्येति स नाग्रहीत्॥४६॥
चौरेण सिद्धदत्तस्य, दर्शितान्यथ तानि तु । तेन लोभाभिभूतेन, गृहीतान्यल्पमूल्यतः ॥ ४७ ॥
आरक्षकनरैश्चौरः, स ज्ञातःपापयोगतः । यष्टिमुष्ट्यादिभिर्हत्वा, तैश्चानीतो नृपाग्रतः ॥ ४८ ॥

नृपोऽपृच्छदरे क्वास्ति, तद्वस्तु यत्त्वया हृतम् । नामन्यत यदा चौर्यं, तदाऽसौ ताडितोऽधिकम् ॥४९॥
ततस्तेन निजस्थानाद्, वस्तून्यानाय्य वेगत । अर्पितानि समस्तानि, पुन पप्रच्छ भूपति ॥७५०॥
वहुकालात्पुरा यानि, रत्नानि मम कोशत. । त्वया हृतानि तानि क्व, सन्ति चानीय मेऽर्पय ॥५१॥
तेनोक्त धनदत्ताय, प्राग् दत्ता मणयो मया । न गृहीता पर तेन, सिद्धदत्तोऽग्रहीच्च तान् ॥ ५२ ॥
आकार्य सिद्धदत्त तं, राज्ञा कारागृहे रुपा । क्षिप्त्वा नीत्वा च सर्वस्व, मुक्तश्चौरयुतोऽथ स ॥ ५३ ॥
निर्धनत्व तत· प्राप्तो, महाखेद वहन् हृदि । गृहवासाच्च निर्विण्ण , सिद्धदत्तो व्यचिन्तयत् ॥ ५४ ॥
पूर्व मे लघुता लोकेऽधुना जाता विशेपत । निर्धनत्वे च गार्हस्थ्यमसार तुपवद्धृशम् ॥ ५५ ॥
इति ध्यात्वा स निस्सृत्य, गृहाद्गत्वा च कानने । भिक्षाहारी जटाधारी, तापसोऽभूद्विरागवान् ॥ ५६ ॥
इतश्च धनदत्त स, पृष्ट आकार्य भूभुजा । अमूल्यमूल्यरत्नानि, न क्रीतानि कथ त्वया ? ॥ ५७ ॥
स प्रोचेऽभिग्रह स्वामिन् !, गुरुदत्तोऽस्त्यय मम । अदत्तचौर्यवस्तूनि, न ग्राह्याणि कदाऽपि यत् ॥५८॥
व्यसनेषु न सक्तोऽह, परनारीपराङ्मुखः । इति निर्लोभता प्रेक्ष्य, तद्गुणै रञ्जितो नृप ॥ ५९ ॥

अतः सन्मान्य भूपेन, दत्त्वा श्रेष्ठिपदं पुरे । सुखासने निवेश्यासौ, प्रेषितो निजवेश्मनि ॥ ७६० ॥
एवं दिने दिने तस्य, बभूवुर्बहुसंपदः । विवेकात्तन्न कुर्यात्स, येन कुप्याति भूपतिः ॥ ६१ ॥
एकदा तत्पुरे राजसभायां कोऽपि धूर्त्तराट् । कोटिमूल्यानि रत्नानि, करे कृत्वा समागतः ॥ ६२ ॥
स प्रोचेऽमूनि रत्नानि, पञ्च तस्मै ददाम्यहम् । समुद्रस्य पयः पङ्कं, सङ्ख्याय कथयेन्मम ॥ ६३ ॥
मच्चित्ते संशयोऽप्यस्ति, मध्ये कर्दमनीरयोः । किं न्यूनमधिकं किं वा, यो दक्षः स वदत्विदम् ॥६४॥
तदा तस्य न केनापि, भग्नोऽयं वक्रसंशयः । तच्छ्रुत्वा धनदत्तस्योत्पन्ना बुद्धिः सुरीवरात् ॥ ६५ ॥
तत्रागत्य विवेकी सोऽवादीद्वादिनरं प्रति । हंहो भद्र ! घनः पङ्कः, स्वल्पं नीरञ्च विद्यते ॥ ६६ ॥
यदि ते संशयस्तर्हि, गङ्गादितटिनीजलम् । पृथक् कृत्वा समुद्राच्च, नीरपङ्कौ पृथक् कुरु ॥ ६७ ॥
तुलामादाय दक्ष ! त्वं, ततस्तोलय तद्द्वयम् । तुलिते ज्ञास्यते सर्वं, वचो मन्यस्व मेऽथवा ॥ ६८ ॥
ज्ञातं प्राक् तेन मत्पृष्टं, चेन्न कः कथयिष्यति । रमिष्येऽहं तदा धूर्त्तकलया नगरेऽखिले ॥ ६९ ॥
असाध्यं वचनं तेन, मानितं हारितं पुनः । गृहीत्वा पञ्च रत्नानि, राज्ञा निष्काशितः पुरात् ॥७७०॥

घनदत्तस्य सद्बुद्धिं, वीक्ष्य राजा चमत्कृत । दत्त्वा पश्चापि रत्नानि, प्रेषितोऽसौ निजे गृहे ॥ ७१ ॥
अथान्येद्यु पुन. कोऽपि, सार्थेन सह सार्थप । स्वामी द्वादशकोटीना, धूर्त्तत्वेनागत पुरे ॥ ७२ ॥
सुरूपो यौवनावस्थ , स्फारशृङ्गारशोभित । गणिकाऽनङ्गलेखाया, मन्दिरे तत्र सोऽगमत् ॥ ७३ ॥
महेभ्य इति त ज्ञात्वा, वेश्या सन्मानपूर्वकम् । चित्ते कपटमाधाय, माययैव तदाऽब्रवीत् ॥ ७४ ॥
अहो ममाद्य सद्भाग्य, जजागार पुरातनम् । यतो जङ्गमकल्पद्रु , प्राप्तोऽयं मम मन्दिरे ॥ ७५ ॥
अद्य स्वप्ने मया स्वामिन्!, स्वर्णद्वादशकोटय । त्वत्त प्राप्ता अभूत्सत्य, तत्प्रत्यक्ष तवागमे ॥७६॥
धूर्तो धूर्त्तवच श्रुत्वा, हसित्वोवाच तादृशम् । भद्रे! सत्यं त्वया प्रोक्त, पर मे वचन शृणु ॥ ७७ ॥
स्वप्नमध्ये मयाप्यद्य, हेमाष्टादशकोटय । न्यासार्थं त्वद्गृहे मुक्तास्तदर्थेऽहमिहागत ॥ ७८ ॥
मयाऽष्टादश वर्षाणि, स्थातव्य त्वद्गृहे मुदा । परमेकामिमा वार्त्ता, मदीया शृणु सुन्दरि! ॥ ७९ ॥
साम्प्रत सबल सार्थं, कृत्वा देशान्तर प्रति । व्यवसायार्थलाभार्थं, गमिष्याम्यहमेकदा ॥ ७८० ॥
ततोऽष्टादश कोटीना, मध्यात् द्वादशकोटयः । मम स्थापनिका देया, यामि देशान्तर यथा ॥८१॥

तत्रोपार्ज्य महाद्रव्यं, वलित्वा त्वरितं पुनः । आगत्य त्वद्गृहे भद्रेऽहं स्थास्यामि महासुखम् ॥ ८२ ॥
किं याचसे वृथा धूर्त्तेत्युक्त्वा किञ्चिद्ददौ न सा । ततो धृत्वा स्वहस्ते सा, नीता तेन चतुष्पथे ॥ ८३ ॥
वारयितुं विवदन्तौ, तौ केनापि न शक्यते । न भग्नोऽसौ यदा वादस्तदा वेश्याऽब्रवीदिदम् ॥ ८४ ॥
अमुं भनक्ति यो वादं, तस्मै कनककोटिकम् । दास्यामि नान्यथा वाग्मे, या प्रोक्ता लोकसाक्षिकम् ॥८५॥
तच्छ्रुत्वा धनदत्तोऽथ, विवेकोत्पन्नबुद्धितः । कोटिद्वादशमूल्यानि, रत्नानि धृतवान् करे ॥ ८६ ॥
वामे भुजे दर्प्पणश्च, धृत्वा तं धूर्त्तमब्रवीत् । मणीन् गृहाण भद्रेतान्, दर्प्पणे प्रतिबिम्बितान् ॥८७॥
धूर्त्तो जगाद रे धूर्त्त!, किमिदं दीयते मम । प्रतिबिम्बानि रत्नानां, गृहीतुं को नरः क्षमः ? ॥ ८८ ॥
धनदत्तोऽवदत्किं वो, जनोक्तिरिति न श्रुता ? । यादृशी भावना चित्ते, सिद्धिर्भवति तादृशी ॥ ८९ ॥
प्रासादसदृशो देवो, देवतुल्या च पात्रिका । यादृक् स्वर्णं त्वया न्यस्तं, तादृशं ह्यर्प्यते मया ॥७९०॥
स्वप्ने न्यस्तं याचसे त्वं, दीयते प्रतिबिम्बितम् । कश्चिद्दोषो हि नास्त्यत्र, धूर्त्ते धूर्त्तत्वमाचरेत् ॥९१॥
विलक्षीभूय धूर्त्तोऽसौ, धिक्कृतः कुत्रचिद्गतः । वेश्यातः स्वर्णकोटिश्च, नीत्वा दानं धनो ददौ ॥ ९२ ॥

अन्येद्यु नगरे कश्चिद्दुष्टो राक्षस आगत । अकस्मात् नृपति हृत्वा, गत्वा च व्योमनि स्थित ॥९३॥
मृततुल्य नृप दृष्ट्वा, विलक्षा व्यालपन्प्रजा । शान्तिक पौष्टिक भोगान्, बलिं चक्रुश्च मन्त्रिण ॥९४॥
तत प्रत्यक्षता प्राप्तो, राक्षस. स्माह भो जना ।। यदि मे कोऽपि सत्त्वेन, दत्ते स्वाङ्गबलि नर ॥ ९५ ॥
तस्य मासेन तृप्तोऽह, नृप मुञ्चामि नान्यथा । श्रुत्वैव ते जनास्तस्थुरधोवक्त्रा असाध्यत ॥९६॥ युग्मम्।
तत्रागाद्धनदत्तोऽथ, परोपकृतिकर्मठ । विशेषान्नृपवात्सल्यात्स्वामिकार्यैकतत्पर ॥ ९७ ॥
साहसेन पलादस्य, निजाङ्ग तेन कल्पितम् । तदा तत्सत्त्वतुष्टेन, विमुक्तो रक्षसा नृप ॥ ९८ ॥
स्वर्णद्वादशकोटीना, धनदत्तगृहे सुरः । वृष्टि कृत्वा गत स्थाने, देवा पुण्यवशा किल ॥ ९९ ॥
नृपेण धनदत्तोऽसौ, निजजीवितदायक । सर्वामात्येषु मन्त्रीश , कृतो मुख्यो महामति ॥ ८०० ॥
षट्पञ्चाशत्कोटिनाथो, धनदत्तोऽभवत्क्रमात् । विवेकात्कुरुते धर्म्मं, दृष्ट्वा धर्म्मफल महत् ॥ १ ॥
अथैकदा वसन्तर्त्तौ, राजा स्वान्त पुरान्वित । वसन्तखेलनायोच्चैर्महारङ्गाद्वने गत ॥ २ ॥
क्रीडतस्तस्य मध्याह्ने, भुक्तिसामग्रिका कृता । इतश्चाययौ द्वादशयोजनारण्यतो मुनि ॥ ३ ॥

सार्थाद्भ्रष्टः क्षुधातृष्णामहातापैः प्रपीडितः । तदाश्रित्य तरुच्छायां, स श्रान्तत्वादुपाविशत् ॥ ४ ॥
तं मुनिं प्रेक्ष्य राजा स, राज्ञीवृन्दसमन्वितः । तत्रागत्य सुभावेन, ववन्दे विनयान्वितः ॥ ५ ॥
प्राशुकान्नपयोदानैः, स्वस्थीचक्रेऽमुना मुनिः । धर्म्मं श्रुत्वा च तत्पार्श्वे, श्रावकत्वं समाश्रयत् ॥ ६ ॥
एवं पुनर्नृपे तस्मिन्, वसन्ततौं वने गते । सार्थभ्रष्टं साधुयुगं, तृषार्त्तं तत्र चागतम् ॥ ७ ॥
राज्ञा तन्दुलनीरेण, तयोः संपूर्य तुम्बकम् । दत्तं साधू च तत्प्रीत्या, स्वस्थीभूतौ गतौ क्वचित् ॥८॥
रत्नवीरनृपः सोऽथाराध्य धर्म्मं जिनोदितम् । मृत्वा चायुःक्षये जातो, रत्नपालो नृपो भवान् ॥ ९ ॥
श्रीदेव्यपि मृता राज्ञी, जाता भृङ्गारसुन्दरी । तापसः सिद्धदत्तोऽथ, कृत्वाऽज्ञानतपो मृतः ॥ ८१० ॥
जयनामाभवन् मन्त्री, स ते राज्ये धराधिपः । पूर्वं त्वयाऽस्य यत्पोतो, धृतो द्वादश वासरान् ॥११॥
तस्माद्द्वादश वर्षाणि, तेन त्वद्राज्यमाददे । पुरातिदण्डितस्तेन, जातो वैरी तवेह सः ॥ १२ ॥
भृङ्गारसुन्दरी पूर्वभवे मार्गे क्वचिन्मुनिम् । कायोत्सर्गस्थितं धूलिक्षेपणाद्यैरताडयत् ॥ १३ ॥
तेन पापप्रभावेण, पीडिता जयमन्त्रिणा । कृतोऽल्पो हि महर्षीणामुपसर्गोऽतिदुःखदः ॥ १४ ॥

जीवोऽपि धनदत्तस्य, सोऽभूद्वैदेशिको नर' । वनमध्ये च या दत्ताऽऽराधना यस्य रोगिण ॥ १५ ॥
स मृत्वाऽभूत्ततो देव , पूर्वप्रीत्येह येन ते। सङ्ग्रामे मन्त्रिणा सार्धं, सानिध्यं कृतमुत्तमम् ॥ १६ ॥
पुन पुण्यप्रभावेण, स्वराज्यं भोगसौख्यदम् । त्रिखण्डाधिपतित्वञ्च, समाप्त भवता नृप ! ॥ १७ ॥
पुरा तन्दुलनीरेण, भृत्वा पात्र यदर्पितम् । मुनिभ्यस्तेन पुण्येन, प्राप्त सद्रसकुम्पक ॥ १८ ॥
पुरा कनकमञ्जर्या, रे कुष्ठिन्मद्वचो न किम् । करोषीति निजे भृत्ये, प्रोक्तं सा तेन कुष्ठिनी ॥ १९ ॥
एव प्राग्गुणमञ्जर्या, किं रे अन्ध ! न पश्यसि ? । इत्युक्त निजदासस्य, तेनान्धाऽभूदिहाप्यसो ॥१२०॥
भुक्ते कर्म्मविपाकेऽस्मिन्, गुणोऽभूदेतयो स्त्रियो । इत्यनालोचित कर्म्म, भोक्तव्य सर्वथा नृप ! ॥२१॥
इत्थ पूर्वभव राजा, श्रुत्वा ज्ञात्वा च कर्म्मणाम् । शुभाशुभफल धर्मे, विशेषाद् उद्यतोऽभवत् ॥ २२ ॥
चतुर्मासीमथो भूप , केवलज्ञानिन गुरुम् । सस्थाप्यात्मपुरे भक्त्या, चक्रे धर्मप्रभावनाम् ॥ २३ ॥
अमारिं भूरिदेशेषु, प्रावर्त्तयत सर्वदा । न्यवारयच्च सप्तापि, व्यसनानि निजाज्ञया ॥ २४ ॥
जिनालयेषु वादित्रगीतनृत्यध्वजादिकान् । महोत्सवान् महापूजा, कारयामास सोऽन्वहम् ॥ २५ ॥

कस्मिन् पुण्यदिने राजा, गृहीत्वा पौषधं व्रतम् । पप्रच्छ गुरुं नत्वा च, कीदृक् संसारचेष्टितम् ?॥२६॥
गुरुर्जगाद संसारो, गहनो यत्र देहिनः । भूयो भूयोऽपि जायन्ते, नानागतिषु कर्मभिः ॥ २७ ॥
स एव जायते तिर्यङ्, स एव नारको भवेत् । स एव मानवोऽपि स्यात्, स एव च सुरो भवेत् ॥२८॥
पिता क्वापि भवेत्पुत्रो, माता हे हे भवेद्वधूः । बन्धुर्भवति वैरी च, भविनो हि भवान्तरे ॥ २९ ॥
संसारे कोऽपि नो कस्य, वृथा मोहं धरेद्बुधी । अत्रार्थे वसुदत्ताङ्गजन्मनः कथ्यते कथा ॥ ८३० ॥
यतः-सुयभवे सुच्छन्दं मुद्दियलयमण्डवेहि खेलंतो । जणएण पासएहिं, बद्धो खद्धो य जणणीए ॥३१॥
तथाहि काञ्चनपुरे, वसुदत्तः सुसार्थपः । तद्भार्या वसुमत्याह्वा, सुतोऽभूद्वरुणस्तयोः ॥ ३२ ॥
मातापित्रोः स चात्यन्तं, प्राणेभ्योऽप्यधिकः प्रियः । महामोहात्क्षणमपि, तं विना तौ न तिष्ठतः ॥३३॥
अत्याग्रहेऽन्यदा पुत्रो, गतो देशान्तरं प्रति । उपार्ज्य धनलक्षाणि, वलितोऽसौ गृहं प्रति ॥ ३४ ॥
भीमाटव्यां मृतः शूलरोगे राजशुकोऽजनि । धनं कियद्गतं तस्य, शेषं दत्तं पितुर्जनैः ॥ ३५ ॥
सुतशोकेन तन्माता, हृदयस्फोटतो मृता । आर्त्तध्यानेन मार्जारी, जाताऽसौ निजवेश्मनि ॥ ३६ ॥

वसुदत्तोऽन्यदाऽन्यत्र, गत्वा वाणिज्यकर्मणि । प्राप्य लाभ वलित्वा च, गतस्तामटवीं क्रमात् ॥३७॥
यत्र राजशुकोऽप्यस्ति, तत्सुत पूर्वजन्मनि । भवितव्यात्स तत्रास्थात्, यत्र तत्कीरसस्थिाति ॥३८॥
स सहकारशाखाया, निविष्टो ददृशेऽमुना । मोहात्पाशेन वद्धा च, गृहीत्वागान्निजे पुरे ॥ ३९ ॥
रम्यपञ्जरके क्षिप्त्वा, पुत्रवत्तमपालयत् । भोजयत्यात्मना सार्द्धं, पाठयेत् स दिवानिशम् ॥ ८४० ॥
श्रेष्ठिनो विस्मृत दातु, पञ्जरद्वारमेकदा । कर्म्मयोगेन मार्जार्या, तया कीरो विनाशित· ॥ ४१ ॥
वसुदत्तोऽथ तच्छोक, न मुमोच दिवानिशम् । कियत्यपि गते काले, तत्रागात्कोऽपि केवली ॥ ४२ ॥
वसुदत्तोऽथ त नत्वा, पप्रच्छ रचिताञ्जलि । शुकोपरि कथ मोहो, घनो मेऽभूद्वद प्रभो ! ॥ ४३ ॥
भार्य्यानन्दनसवन्ध, तस्याग्रे केवली जगौ । ततो वैराग्यतो दीक्षा, गृहीत्वा स ययौ शिवम् ॥ ४४ ॥
हे रत्नपाल ! ससारचेष्टेय चित्रकारिणी । पुत्र प्रिय शुको जातो, जनन्या सोऽपि भक्षित ॥ ४५ ॥
इत्यादि भववृत्तान्त, प्रोक्त्वा प्रोवाच केवली । मनोवचनकायाद्या , स्थिरीकार्या भवच्छिदे ॥ ४६ ॥

यत –मनोविशुद्ध पुरुपस्य तीर्थं, वाक्सयमश्चेन्द्रियनिग्रहश्च ।

त्रीण्येव तीर्थानि शरीरभाजा, स्वर्गश्च मोक्षश्च निदर्शयन्ति ॥ ४७ ॥

उल्लो सुक्को य दो छूढा, गोलया मट्टियामया । दोवि आवडिया कुड्डे, जो उल्लो सोत्थ लग्गई ॥ ४८ ॥

एवं लग्गन्ति दुम्मेहा, जे नरा कामलालसा । विरत्ता ते न लग्गन्ति, जहा से सुक्कगोलए ॥ ४९ ॥

श्रुत्वैवं सुगुरोर्वचो नरपतिः श्रीरत्नपालाभिधः, संसाराद्विमुखोऽभवच्छुभमतिर्दीक्षाभिलाषी ततः । श्रीमन्मेघरथः सुतो निजपदे संस्थापितोऽथामुना, दत्ता हेमरथादिनन्दनशतस्यापि स्वदेशाः पृथक् ८५०

पृथिवीमनृणां चक्रे, राजा वाञ्छितदानतः । वपति स्म धनं तीर्थे, सत्पात्राणि पुपोष च ॥ ५१ ॥

सद्दिने गजमारुह्य, सर्वसैन्यसमन्वितः । महोत्सवेन राजाऽगाद्व्रतार्थं गुरुसंनिधौ ॥ ५२ ॥

सहस्रसंख्यभूपालैः; राज्ञीभिर्नवभिः पुनः । अन्यैश्चापि नरैः सार्धं, स चारित्रमुपाददे ॥ ५३ ॥

राज्यं प्राप्य पुरा येन, विजिता वाह्यशत्रवः । जेतुं भावरिपुं पश्चात्, दीक्षासाम्राज्यमाददे ॥ ५४ ॥

तज्जयार्थं क्षमाखड्गं, जिनाज्ञाशीर्षकश्च सः । शीलसन्नाहमादायारुरोह ज्ञानहस्तिनम् ॥ ५५ ॥

[illegible] तातं नत्वा गता गृहम् । ततः केवलिना सार्धं, राजर्षिर्विजहार सः ॥ ५६ ॥

सर्वसिद्धान्तविज्ञोऽसौ, लेभे सूरिपद क्रमात् । भव्यसत्त्वाम्बुजाराम, सूर्यवच्च व्यबोधयत् ॥ ५७ ॥
क्षपकश्रेणिमारूढो, घनकर्मचतुष्टयम् । क्षिप्त्वा संप्राप सोऽन्येद्यु , केवलज्ञानमुज्ज्वलम् ॥ ५८ ॥

काव्यम्–युक्त पञ्चसहस्रसाधुभिरय श्रीरत्नपालो मुनि ,
पञ्चाशीतिसुवर्षलक्षप्रमित सपाल्य चायुर्निजम् ।
धर्म्मानन्तजिनान्तरे शिवपद सप्राप सिद्धा तथा,
साध्वी पञ्चशतैर्युता भगवती शृङ्गारसुन्दर्यपि ॥ ५९ ॥

इत्युक्ता शीलमाहात्म्ये, शृङ्गारसुन्दरीकथा । तत्प्रस्तावे कृत रत्नपालसत्पुण्यवर्णनम् ॥ ६० ॥
तस्यैवाष्टान्यराज्ञीना, सतीनाञ्च कथा मता । अन्येऽपि शीलसवन्धा , प्रोक्ता॰ सबोधदायका ॥ ६१ ॥
श्रीवीर॰ स्माह भो भव्या !, रत्नपालप्रियाकथाम् । श्रुत्वा सुशीलमाहात्म्ये, पालनीय त्रिधापि तत् ६२
श्रीमन्मल्लीजिनोऽथ नेमिजिनपो जम्बूप्रभु केवली, सम्यग्दर्शनवान् सुदर्शनगृही श्रीस्थूलिभद्रो मुनि ।
सच्छृङ्गारिसरस्वती च सुलसा सीता सुभद्रादय॰, शीलोदाहरणेष्वमी सुभाविनो जाता भविष्यन्ति च ६३

परसमयेऽपि—स्नातं तेन समस्ततीर्थसलिलैः सर्वापि दत्ता मही,
यज्ञानाञ्च कृतं सहस्रमधिकं देवाश्च सन्तर्पिताः ।
संसाराच्च समुद्धृताः सुपितरस्त्रैलोक्यवन्द्योऽप्यसौ,
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥ ६४ ॥

शीलं भाग्यलतामूलं, शीलं कीर्त्तिनदीगिरिः । शीलं भवाब्धितरणे, यानपात्रसमं मतम् ॥ ६५ ॥

इत्थं प्रोक्ता शीलशाखा, धर्मकल्पद्रुपादपे । एनां वीरमुखाच्छ्रुत्वा, भव्या आनन्दमादधुः ॥ ६६ ॥

इति० श्रीवीरदेशनायां श्रीधर्मकल्पद्रुमे चतुःशाखिके द्वितीयशीलशाखायां
श्रीरत्नपालप्रियाशृङ्गारसुन्दर्याख्याने पञ्चमः पल्लवः समाप्तः ॥

भूपालश्चक्रवर्त्ती हलमुशलधरो वासुदेवस्तदन्यो,
यो वा विद्याधरेन्द्र फणिपतिविहिताशेषविद्याप्रसाद ।
ये चेशा व्यन्तराणा वरभवनसदा ज्योतिषा स्वर्गिणा वा,
श्रीतीर्थेशाश्च तेषामपि पदममलै॰ प्राप्यते पूर्वपुण्यैः ॥ १ ॥

शत्रिप्रा क्षयमेति पालयति यद्वेला जलानां निधिर्यत्तापापदमम्बुद शमयते यद्दिव्यत॰ शुध्यते ।
गर्न्दिर्गपुणमुणा॰ क्षपयितु भानुर्यदुज्जृम्भते, विश्वं यच्च बिभर्त्ति भूतनिवह(ह)स्तद्धर्म्मविस्फूर्जितम्॥२॥
गो धीमान् कुलजः क्षमी विनयवान् दाता कृतज्ञ॰ कृती, रूपैश्वर्ययुतो दयालुरशठो दान्त॰ शुचिस्सत्रप ।
राज्ञोगी ध्वरोधुरो मधुरवाक् सत्यव्रतो नीतिमान् , बन्धूना निलयो नृजन्म सफल तस्येह चामुत्र च३
अमोवे स्वामिनं शिष्यो, गौतमो गणनायक । भगवस्त्वत्प्रसादेन, श्रुतः शीलगुणो जनै॰ ॥ ४ ॥
धर्म्मकल्पद्रुमे शाखा, तुरीया या तपोमयी । तत्फलं श्रोतुमिच्छामि, भव्या॰ शृण्वन्तु चापरे ॥ ५ ॥
ततो योजनगामिन्या, मेघगम्भीरया गिरा । सर्वसशयहारिण्या, प्रोवाच चरमो जिनः ॥ ६ ॥

भो भव्या ! नृभवं प्राप्य, कार्यं द्वादशधा तपः । सर्वार्थसाधकं धाम, तेजसां दुःखबाधकम् ॥ ७ ॥
तावद्गर्जति कर्मेभो, विभयो भुवनोदरे । यावच्चित्तगुहाध्यासी, तपःसिंहो न खेलति ॥ ८ ॥
अस्माभिरपि यच्चक्रे, प्रव्रज्याज्ञानमुक्तिषु । माहात्म्यं तपसस्तस्य, श्रुतिवाचामगोचरः ॥ ९ ॥
सुमतिस्त्वेकभक्तेन, चतुर्थाद्वसुपूज्यभूः । पार्श्वमल्ली अष्टमेन, शेषाः षष्ठात्प्रवव्रजुः ॥ १० ॥
अष्टमात्केवलं प्रापुः, श्रीपार्श्वर्षभमल्लयः । वासुपूज्यश्चतुर्थेन, शेषाः षष्ठेन ज्ञानिनः ॥ ११ ॥
उपवासैः शिवं षड्भिरगान्नाभिभवो जिनः । द्वाभ्यां वीरोऽपरे मासक्षमणेन शिवङ्गताः ॥ १२ ॥
यतः-बहिरङ्गमलस्य जलैराहारमलस्य भेषजैः शुद्धिः । वचनमलस्य च दिव्यैर्दुष्कर्ममलस्य सत्तपसा १३
अनेकैरपि भेदैस्तत्कथितं ज्ञानिभिस्तपः । विंशतिस्थानकं किन्तु, तीर्थकृद्गोत्रदायकम् ॥ १४ ॥
तद्यथा—अर्हतां प्रतिमार्चाभिरर्हतां स्तवनादिभिः । एकमार्जितवान् स्थानमवर्णादिनिवारणैः ॥ १५ ॥
सिद्धिस्थानेषु सिद्धानामुत्सवैः प्रतिजागरैः । एकत्रिंशत्सिद्धगुणोत्कीर्त्तनैश्च द्वितीयकम् ॥ १६ ॥
प्रवचनोन्नतिः सम्यग्, ग्लानक्षुल्लादिसाधुषु । अनुग्रहमनोज्ञा या स्थानमेतत्तृतीयकम् ॥ १७ ॥

गुरूणामञ्जलि बद्ध्वा, वस्त्राहारादिदानत । असमाधिनिषेधेन, स्थानमेतत्तुरीयकम् ॥ १८ ॥
स्थविरा द्विविधा प्रोक्ता, वयसा सुगुणैरपि । तेषा भक्तिविधानेन, पञ्चम स्थानक विदु ॥ १९ ॥
बहुश्रुताना ग्रन्थार्थवेदिना तत्त्वशालिनाम् । प्रासुकान्नादिदानेन, षष्ठस्थानमुदीरितम् ॥ २० ॥
तपस्विना सदोत्कृष्टतप कर्म्मस्थिरात्मनाम् । विश्रामणादिवात्सल्यात्सप्तमस्थानमुच्यते ॥ २१ ॥
ज्ञानोपयोगसात्यन्त (सातत्य), द्वादशाङ्गागमस्य च । सूत्रार्थोभयभेदेन, स्थान ननु तदष्टमम् ॥२२॥
दर्शन रहित शङ्काद्यैः स्थैर्यादिगुणान्वितम् । शमादिलक्षण यत्तु, स्थानक नवमं मतम् ॥ २३ ॥
विनयोऽपि चतुर्भेदो, ज्ञानाद्दर्शनतोऽपि च । चारित्रादुपचाराच्च, स्थान तद्दशम मतम् ॥ २४ ॥
आवश्यक भवेत्स्थानमेकादशमिद पुन । इच्छादिर्दशधा या च, सामाचारी जिनोदिता ॥ २५ ॥
शीलव्रत विशुद्ध यन्नवगुप्तिनियन्त्रितम् । यत्पाल्यं निरतीचार, स्थानं तद् द्वादश भवेत् ॥ २६ ॥
त्रयोदशमिद स्थान, क्षणे क्षणे लवे लवे । शुभध्यानस्य करण, प्रमादपरिवर्जनम् ॥ २७ ॥
तपो विधीयते शक्त्या, बाह्याभ्यन्तरभेदवत् । असमाधिपदत्यागात्, स्थानमुक्त चतुर्दशम् ॥ २८ ॥

त्यागोऽतिथिसंविभागः, शुद्धान्नोदकदानतः । तपस्विनां यथाशक्त्या, स्थानं पञ्चदशं हि तत् ॥ २९ ॥
वैयावृत्त्यं तु गच्छस्य, वालादिदशभेदतः । भक्तविश्रामणाद्यैः स्यात्, षोडशं स्थानकं किल ॥ ३० ॥
समाधिः सर्वलोकस्य, पीडादिकनिवारणात् । मनःसमाधिजननं, स्थानं सप्तदशं भवेत् ॥ ३१ ॥
अपूर्वज्ञानग्रहणात्, सूत्रार्थोभयभेदतः । अष्टादशमिदं स्थानं, सर्वज्ञैः परिभाषितम् ॥ ३२ ॥
श्रुतभक्तिः पुस्तकानां, लेखनादिषु कर्म्मतः । व्याख्यानख्यापनैरेकोनविंशं स्थानकं भवेत् ॥ ३३ ॥
प्रभावना प्रवचने, विद्यावादनिमित्ततः । शासनस्योन्नतिर्या स्यात् , स्थानं विंशतिसंज्ञकम् ॥ ३४ ॥
एकैकं तीर्थकृन्नामकर्म्मबन्धस्य कारणम् । एकं द्वे त्रीणि सर्वाणि, सेवितानि पुरा जिनैः ॥ ३५ ॥

काव्यम्—ताराणां तरणिः शशी च तमसां वह्नी वनानां द्विपः,
शीतानामनलोऽनिलो जलमुचां दम्भोलिरुर्वीभृताम् ।
दानं दुर्यशसां मणिर्विषरुजां याद्दग्गदानां सुधी–
भूयो जन्मभुवां शरीरिषु भवेत्ताद्दक् तपोऽप्यंहसा(म्) ॥ ३६ ॥

सौभाग्य भुवनाधिपत्यपदवीं रूप ददात्यद्भुत, लक्ष्मीं कामपि सञ्चिनोति तनुते कुन्दावदात यश ।
भोगान्मर्त्यसुरेन्द्रयोरपि सुखं दत्ते प्रदत्ते शिव, तत्किं यन्न ददाति सौख्यमसमं तप्तं विशुद्ध तप ॥३७॥
यन्न सिध्यति तन्नास्ति, तपोमाहात्म्यतोऽङ्गिनाम् । वाञ्छितार्थस्य संसिद्धिर्यथाऽभूत्पुरुषोत्तमे ॥ ३८ ॥
पप्रच्छ प्रभुपार्श्वे स, गणभृद्गौतम पुन । कथ सत्तपसा सिद्धि, सञ्जाता पुरुषोत्तमे ॥ ३९ ॥
मेघमुक्तं यथा नीर, वस्तुवर्णसम भवेत् । स्वाम्युवाच तथा सर्वसत्त्वभाषानुग वच· ॥ ४० ॥
अस्मिन्नेव महाद्वीपे, क्षेत्रे भरतसञ्ज्ञिके । पद्मिनीपुरमित्यस्ति, पद्मासुन्दरमन्दिरम् ॥ ४१ ॥
वसन्ति धनिनो लक्षकोटीशा यत्र लक्षश । खेलन्ति भोगिनो यत्र, परमानन्दपूरिता ॥ ४२ ॥

यत –दुग्धेन धेनु· कुसुमेन वल्ली, शीलेन नारी सरसी जलेन ।
सुस्वामिना भान्ति सभासदश्च, शमेन विद्या नगरी धनेन ॥ ४३ ॥
सुधर्म्मशीलाश्च विशुद्धचित्तास्तीर्थेषु पात्रेषु च दत्तवित्ता ।
भयोज्झिता वीतवियोगशोका, विवेकिनो यत्र वसन्ति लोका ॥ ४४ ॥

गुणिनः सुनृतं शौचं, प्रतिष्ठा गुणगौरवम् । अपूर्वज्ञानलाभश्च, यत्र तत्र वसेत्सुधीः ॥ ४५ ॥
यत्रार्जितानि पुण्यानि, भुञ्जानाः प्रत्यहं जनाः । अर्ज्जयन्ति नवीनानि, धनानीव विवेकिनः ॥ ४६ ॥
कार्प्पण्यं स्वयशोदाने, लोभो गुणगणार्जने । विद्यते व्यसनं यत्र, जनानां धर्म्मसेवने ॥ ४७ ॥
तत्पुरं पालयामास, राजा पद्मोत्तराभिधः । गुणसौरभ्यतो विश्वं, वासितं येन पद्मवत् ॥ ४८ ॥
यतः ओजः सत्त्वं नीतिर्व्यवसायो बुद्धिरिङ्गितज्ञानम् । प्रागल्भ्यं सुसहायाः, कृतज्ञता मन्त्ररक्षणं त्यागः ४९
जनरागः प्रतिपत्तिः मित्रार्जनमानृशंस्यमस्तम्भः । आश्रितजनवात्सल्यं दश सप्त गुणाः प्रभुत्वस्य ५०
युग्मम् ।
सद्धर्म्मचारिणी तस्य, जाता नाम्ना मनोहरा । पञ्चसहस्रराज्ञीनां, मुख्या या महिषी वरा ॥ ५१ ॥
रजन्यामन्यदा देव्या, तया स्वप्ने महागजः । सश्रीकः सबलो दृष्टः, प्रचण्डः पर्वताकृतिः ॥ ५२ ॥
प्रभाते भर्तुरग्रे सा, प्रिया स्वप्नं न्यवेदयत् । पप्रच्छ च प्रभो ! स्वप्नफलं किं मे भविष्यति ? ॥ ५३ ॥
स्वबुद्धिकुशलत्वेन, राजाऽवोचत्प्रिये ! शृणु । एतत्स्वप्नानुभावेन, तव भावी सुतोत्तमः ॥ ५४ ॥

एव श्रुत्वा भृश राज्ञी, प्रमोदपेशलाऽभवत् । तद्दिनात्क. सुरश्च्युत्वा, तस्याः कुक्षाववातरत् ॥ ५५ ॥
तं गर्भं विभ्रती राज्ञी, विशेपात् शुशुभेतराम । निधान रत्नगर्भेव, शुक्तिवन्मौक्तिकव्रजम् ॥ ५६ ॥
दोहदाश्च शुभास्तस्या, उत्पन्ना पूरिता अपि । शुभेऽह्नि सुपुवे सूनुं, सा सुभाग्य शुभाकृतिम् ॥ ५७ ॥
पुत्रे जाते नृपस्याङ्गे, हर्पोत्कर्पो ममौ न हि । महता विस्तरेणासौ, तस्य जन्मोत्सव व्यधात् ॥ ५८ ॥
पुरुपोत्तमनामाऽथ, धात्रीभि परिपालित । क्रमात्प्रवर्द्धमानोऽसौ, सुतो जातोऽष्टवार्पिक· ॥ ५९ ॥
कलास्तेनाल्पकालेनाभ्यस्ता प्राक्शिक्षिता इव । स्वर्गागतस्य पुसो हि, किं नाम दुष्कर भवेत् ? ॥६०॥

यत —कवित्वमारोग्यमतीव मेधा, स्त्रीणा प्रियत्व वहुरत्नलाभ ।
दानप्रसङ्ग· स्वजनेपु पूजा, स्वर्गच्युताना किल चिह्नमेतत् ॥ ६१ ॥

सुधर्म्मं सुभगो नीरुक्, सुदय सुनय· कवि· । सुस्वप्न पात्रदानी च, स्वर्गगामी नरो भवेत् ॥ ६२ ॥

प्रस्तावादन्यच्च—विरोधता वन्धुजनेपु नित्य, सरोगता मूर्खजनेपु सङ्ग ।
अतीव रोषी कटुका च वाणी नरस्य चिह्न नरकागतस्य ॥ ६३ ॥

निघ्नो निर्दयमानी च, स याति नरकावनिम् ॥ ६४ ॥
सरोगः स्वजनद्वेषी, कटुवाग् मूर्खसङ्गकृत् । निघ्नो निर्दयमानी च, स याति नरकावनिम् ॥ ६४ ॥
बह्वाशी नैव सन्तुष्टो, मायालुब्धः क्षुधातुरः । दुस्स्वप्नी चालसो मूढस्तिर्यग्योन्यागतो नरः ॥ ६५ ॥
मायी लोभी क्षुधालुश्चाकार्यसेवी कुसङ्गकृत् । बन्धुद्वेषी दयाहीनः, स च तिर्यग्गतिङ्गमी ॥ ६६ ॥
अनुलोमो विनीतश्च, दयादानरुचिर्मृदुः । सहर्षो मध्यदर्शी च, मनुष्यादागतो नरः ॥ ६७ ॥
निर्दम्भः सदयो दानी, दान्तो दक्षः सदा मृदुः । साधुसेवी जनोत्साही, भावी चात्र नरः पुनः ॥६८॥
अन्यच्च–साभिमाना गुणैस्तुङ्गा, व्यवहारेण धार्मिकाः । विभवाभावसन्तुष्टा, मानवांशाश्च ते नराः॥६९
धीरोद्धतगुणैस्तुङ्गा, आराध्येष्वपि गर्विताः । लोकोपतापप्रवणा, दानवांशा नराः स्मृताः ॥ ७० ॥
लोकोत्तरगुणैर्नम्राः, स्वकीर्त्तिश्रुतिलज्जिताः । स्वार्थं परार्थं मन्वाना, देवांशाः पुरुषोत्तमाः ॥ ७१ ॥
तामसः पातकी लोभी, सात्त्विकोऽमीषु सत्तमः ७२
सात्त्विकः सुकृती दानी, राजसो विषयी भ्रमी । तामसः पातकी लोभी, सात्त्विकोऽमीषु सत्तमः ७२
शास्त्रशस्त्रकलाभ्यासकोविदः स कुमारराट् । सात्त्विकादिगुणैः पूर्णः, पावनं प्राप यौवनम् ॥ ७३ ॥
पूर्वपुण्यप्रभावेण, महालीलापुरन्दरः । संयुक्तः सदृशैर्मित्रैः, स्वेच्छया क्रीडते स्म सः ॥ ७४ ॥

इतश्च कर्णाटदेशे, श्रीविशालपुरे वरे । अभूत्पद्मरथो भूपो, रूपनिर्जितमन्मथ ॥ ७५ ॥
पद्मश्री प्रेयसी तस्य, शीलभृङ्गारधारिणी । वनिता वनितामुख्या, वभूव गुणशालिनी ॥ ७६ ॥
जातोपयाचितशतैस्तयो पद्मावती सुता । पद्मिनीलक्षणा पद्म, त्यक्त्वा पद्मागतेव च ॥ ७७ ॥
मनोरथशतै· सार्धं, सा क्रमेण विवर्द्धिता । चतुष्षष्टिकलायुक्ता, जाता प्राप्ता च यौवनम् ॥ ७८ ॥
ता सवीक्ष्य विवाहार्हां, जातचिन्तो नराधिप । तस्या· स्वयंवर कर्तुं, वभूवोद्यमतत्पर ॥ ७९ ॥
तदा पद्मावती प्रोचे, प्रतिज्ञैपाऽस्ति तात! मे । तं वरं परिणेष्यामि, राधावेधे हि य क्षम ॥ ८० ॥
श्रुत्वैव सुविशेषेण, स्वयवरणमण्डपम् । राधावेधमहायुक्तियुक्तं सोऽकारयन्नृप ॥ ८१ ॥
अनेकेष्वथ देशेषु, प्रेष्य तेन स्वमन्त्रिण· । आहूता· पृथिवीनाथा, आगताश्च क्रमेण ते ॥ ८२ ॥
आययौ सचिवाहूत , कुमार पुरुषोत्तम । समित्रः सैन्यसंयुक्त , शोभाडम्बरभासुर ॥ ८३ ॥
आसनेषु निषण्णेषु, तेषु भूपेषु सोऽधिकम् । ऋद्ध्या रूपेण भाति स्म, पद्मोत्तरनृपाङ्गज ॥ ८४ ॥
अथ कन्या सुभृङ्गारा, सुरकन्येव भूगता । सखीजनवृता विष्वक्, सुखासनसमाश्रिता ॥ ८५ ॥

पश्यन्ती च नृपान् सर्वान्, लज्जयेपन्निरीक्षणात् । वरमालां करे कृत्वा, तत्रागच्छत्स्वयंवरे ॥ ८६ ॥
तां वीक्ष्य भूमिपाः सर्व्वे, कामवाणैः प्रपीडिताः । एकदृष्ट्या च पश्यन्तो, दृश्यन्ते स्तम्भिता इव ॥८७॥
मण्डपे तत्र माणिक्यस्तम्भ ऊर्ध्वोऽस्ति मण्डितः । तस्याधो महती मुक्ता, ज्वलत्तैलकटाहिका ॥ ८८ ॥
स्तम्भोपरि द्वादशारं, चक्रं च रचितं चलत्। पाञ्चालिका च चक्रोर्ध्वं, नृत्यन्ती भ्रमति द्रुतम् ॥८९॥
पश्यन्कटाहिकामध्ये, वाणमूर्ध्वं विमुच्य च । विध्येद्दक्षो नरस्तस्या, वामदृष्टिकनीनिकाम् ॥ ९० ॥
स एप कथ्यते सद्भी, राधावेधः सुदुष्करः । राजोचे केन वीरेण, राधावेधोऽत्र साध्यताम् ॥ ९१ ॥
ज्ञातकन्याप्रतिज्ञास्ते, सर्वे तत्रागता नृपाः । राधावेधे जडाः सन्तो, जाताः श्याममुखा ह्रिया ॥ ९२ ॥
शब्दवेदी धनुर्वेदे, कोविदः पुरुषोत्तमः । अथोत्थाय सभामध्ये, स्तम्भस्याधः समागतः ॥ ९३ ॥
चापमादाय चाकृष्य, युक्त्या संपूर्य सायकम् । विव्याध तत्क्षणाद्वामां, पुत्रिकाया कनीनिकाम् ॥९४॥
असाध्यः साधितो राधावेधोऽनेन जयेति च । व्योमन्युच्छलिता वाणी, पुष्पवृष्टिं व्यधुः सुराः ॥ ९५ ॥
ततः पद्मावती हर्षोत्फुल्लनेत्रा व्यचिन्तयत् । पुराऽस्मिन् साभिलापाहं, जाता सद्रूपमोहिता ॥ ९६ ॥

इष्ट वैद्योपदिष्टं तत्, प्रतिज्ञा पूरिताऽद्य यत्। वरमाला तत कन्या, कुमारस्य गलेऽक्षिपत् ॥९७॥

अथ पद्मोत्तरेणाशु, कृत्वा सामग्रिका वराम्। तत सुरङ्गतस्तस्य, सा पुत्री परिणायिता ॥ ९८ ॥

भोजयित्वा च सन्मान्य, वालितास्ते नराधिपा। दत्त्वा शिक्षा कुमारेण, सार्धं सप्रेषिता सुता ॥९९॥

सोऽप्यागच्छन्निजे राज्ये, प्रमोदात्प्रेयसीयुत। तस्य पुरप्रवेश चाकारयत्तत्पितोत्सवात् ॥ १०० ॥

तदा पद्मोत्तरो भूपो, वध्वा रूपेण रञ्जित। मेने धन्य सुतं यस्य, प्रियाऽभूद्गुणभूपिता ॥ १ ॥

यत –शील मार्द्दवमार्जव कुशलता निर्लोभता च त्रपा,

वात्सल्य स्वपरातिथिप्रभृतिके प्रेष्ये वरावर्जनम्।

औचित्य श्वशुरौकसि स्थिरमनास्तद्दूषणाच्छादन,

स्त्रीणा मण्डनमीदृशो गुणगण शेप तु भारात्मकम् ॥ २ ॥

तदा तुष्टो नरेन्द्रोऽसौ, राधावेधस्य साधनात्। कुमारस्य विनीतस्य, युवराजपदं ददौ ॥ ३ ॥

अन्यदा स्थानमासीनो, यावद्भूप सुतान्वित। षट्त्रिंशद्राजकुल्या च, संसेवितपदाम्बुज. ॥ ४ ॥

तावत्कापालिकः कोऽपि, समागात्तत्र संसदि । ऊर्ध्वीकृतभुजादण्डो, नृपायाशीर्वचो ददौ ॥ ५ ॥
नृपेणाभाणि योगीन्द्र !, तवागमनकारणम् । कथय त्वं प्रसादं हि, कृत्वा सम्यग् ममोपरि ॥ ६ ॥
योग्यूचे शृणु राजेन्द्र !, परोपकृतिकर्मठः । एको मन्त्रोऽस्ति मे तस्य, साहाय्यं कुरु साधने ॥ ७ ॥
अस्मिन्नसारे संसारे, परोपकृतिमेव च । आयुःशरीरलक्ष्मीणां, सारं गृह्णाति बुद्धिमान् ॥ ८ ॥
यतः—शास्त्रं बोधाय दानाय, धनं धर्माय जीवितम् । कायः परोपकाराय, धारयन्ति विवेकिनः ॥ ९ ॥

संसारे नरजन्मता न सुलभा पुंस्त्वेऽपि सद्वंशता, सद्वंशे बहुविद्यता बहुविदि प्रायस्तदर्थज्ञता ।
अर्थज्ञे स्फुटचित्रवाक्यपटुता तज्ज्ञेऽपि लोकज्ञता, लोकज्ञेऽपि सुधर्मता सुकृतिनि ब्रह्मज्ञता दुर्लभा११०

द्वाविमौ पुरुषौ लोके, जगत्त्रयशिरोमणी । उपकारे मतिर्यस्य, यश्च नोपकृतापहः ॥ ११ ॥
भूपोऽवादीत्सुतोऽयं मे, साहाय्यं ते करिष्यति । राजादेशात्कुमारोऽथ, जगाम सह योगिना ॥ १२ ॥
कृष्णाष्टम्यां रवेर्वारे, स्मशाने योग्यसौ ययौ । संपूर्य मण्डलं तत्र, रक्तपुष्पैरपूजयत् ॥ १३ ॥
योगी प्रोचे कुमारात्राक्षताङ्गं शवमानय । तेनोक्तं मृतकं क्वास्ति, स वटोल्लम्बितं जगौ ॥ १४ ॥

तत्र गत्वा कुमारोऽथ, वटमारुह्य त शवम् । पाशं छित्त्वाऽमुचद्भूमावुत्ततार स्वय तत ॥ १५ ॥
वटोद्बद्ध शव तावत्स ददर्श च पूर्ववत् । चटित्वा पादपे भूयो, मुमोच मृतकं भुवि ॥ १६ ॥
पुनर्वटे शव दृष्ट्वा, चेष्टा ज्ञात्वा च दैवतीम् । गृहीत्वा मृतक हस्ते, वृक्षादुत्तीर्य सोऽचलत् ॥ १७ ॥
मार्गे गच्छन् कुमारोऽसौ, शुश्रावेति नभोगिरम् । शवमादाय मा याहि, रे त्वा योगी हनिष्यति॥१८॥
श्रुत्वेत्यूर्ध्वमसौ यावदपश्यत्तावदग्रत । दिव्यरूपधरा नारी, प्रत्यक्षीभूय चाब्रवीत् ॥ १९ ॥
राजाधिष्ठायिकाऽत्राह, तव रक्षाऽर्थमागता । तव विघ्नकरो योगी, विद्याव्याजेन धूर्त्तराट् ॥ १२० ॥
मा याहि तत्समीपेऽत , शव मुक्त्वा गृह व्रज । श्रुत्वेति राजसू प्रोचे, प्रतिज्ञा मेऽन्यथा न हि ॥ २१ ॥

यत –दिग्गजकूर्मकुलाचलफणिपतिविधृताऽपि चलति वसुधेयम् ।
प्रतिपन्नममलमनसा, न चलति पुसा युगान्तेऽपि ॥ २२ ॥

अन्यच्च–श्रियो नाश यान्तु व्रजतु निधन गोत्रमखिलं, शिरश्छेदो वाऽस्तु प्रभवतु समन्ताद्विपदपि ।
विवेकार्कज्योतिर्विघटितमहामोहतमस , प्रतिज्ञातादर्थात्तदपि न चलन्त्येव सुधिय ॥ २३ ॥

कृशानुसेवा फलकन्दवर्त्तनं, जटाधरत्वं वनवासिनां व्रतम् ।
महीपतीनामिदमेव तु व्रतं, यदात्मसत्यात्प्रलयेऽपि न च्युतिः ॥ २४ ॥
प्रारभ्यते न खलु विघ्नभयेन नीचैः, प्रारभ्य विघ्ननिहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः, प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २५ ॥
इत्थं श्रुत्वा पुनर्देवी, कुमारं प्रत्यभाषत । वत्सैकं मम वाक्यं त्वं, शृणु संशयवर्जितम् ॥ २६ ॥
यतः—यस्मिन्कुले यः पुरुषः प्रधानः, स एव यत्नेन हि रक्षणीयः ।
तस्मिन्विनष्टे हि कुलं विनष्टं, न नाभिभङ्गेऽप्यरका वहन्ति ॥ २७ ॥
ततो हिताय ते वत्स!, पुनः शिक्षा प्रदीयते । यदा मण्डलमध्ये त्वां, स्थापयेद्योग्यसौ तदा ॥ २८ ॥
ॐकारपूर्वकं पञ्चपरमेष्ठिस्मृतिं धरेः । येन विघ्नानि शाम्यन्ति, विकटान्यपि निश्चितम् ॥ २९ ॥
सिंहेनेव मदान्धगन्धकरिणस्तीक्ष्णांशुनेव क्षपा, ध्वान्तौघा विधुनेव तापततयः कल्पद्रुणेवाधयः ।
तार्क्ष्येणेव फणाभृतो घनकदम्बेनेव दावाग्नयः, सत्त्वाना परमेष्ठिमन्त्रमहिमा(जपतो)वल्गन्ति नोपद्रवाः॥

सङ्ग्रामसागरकरीन्द्रभुजङ्गसिंहदुर्व्याधिवह्निरिपुबन्धनसम्भवानि ।
चौरग्रहभ्रमनिशाचरशाकिनीनां, नश्यन्ति पञ्चपरमेष्ठिपदैर्भयानि ॥ ३१ ॥

एकाग्रचित्ततो वत्स !, ध्येयमेतन्मयोदितम् । इदमुक्त्वा महादेवी तिरोऽभूत्तत्क्षणादपि ॥ ३२ ॥
ततः स्कन्धे शवं धृत्वा, कुमारः पुरुषोत्तमः । जगाम तत्र योगी स, श्मशाने यत्र वर्त्तते ॥ ३३ ॥
शवं प्रक्षाल्य चाभ्यर्च्य, योगिना रक्तचन्दनैः । अग्निकुण्डान्तिके मुक्तः, खड्गं दत्तं च तत्करे ॥ ३४ ॥
शवपादे कुमारं तं, तैलाभ्यङ्गनहेतवे । निवेश्य योग्यभूद् ध्यानहोमाद्यैर्मन्त्रसाधकः ॥ ३५ ॥
ततः शवः समुत्थाय, चालयित्वा स्वासिं करे । अपतद्भूमौ कुमारे, विरूपं कर्तुमक्षमः ॥ ३६ ॥
योगिना चिन्तितं किञ्चित्, विस्मृतं मन्त्रसाधने । सावधानो ददौ भूयो, जापपूर्वकमाहुतिम् ॥ ३७ ॥
शवमुत्थाय चाकृष्य, खड्गं वीक्ष्य नृपाङ्गजम् । नमस्कारप्रभावेण, निष्प्रभावः पपात च ॥ ३८ ॥
ततस्तृतीयवेलायां, रुष्टो देवः शवस्थितः । कृत्वा योगिशिरश्छेदं, व्योम्न्युत्पत्य ययौ हसन् ॥ ३९ ॥
जातं स्वर्णमयं कुण्डे, पतितं योगिनः शिरः । तद् दृष्ट्वाऽग्नौ कुमारेण, प्रक्षिप्तं योगिनो वपुः ॥ १४० ॥

कुण्डे प्रज्वाल्यमानं तत्, सञ्जातः स्वर्णपूरुषः । स्कन्धे धृत्वा कुमारेण, स चानीतो निजे गृहे ॥ ४१ ॥
मुक्त्वा तं च नृपस्याग्रे, संबन्धः कथितोऽखिलः । ज्ञात्वा पुत्रस्य सद्भाग्यं, सहर्षोऽभून्नृपस्ततः ॥ ४२ ॥
अन्यदा तत्पुरोद्यानेऽभ्यागात्सूरिर्गुणाकरः । साधुसप्तशतीयुक्तः, स्थितस्तत्र शुभक्षितौ ॥ ४३ ॥
गुरोरागमनं ज्ञात्वा, तदा पद्मोत्तरो नृपः । सपुत्रः सैन्ययुक्तत्र, गत्वा च तमवन्दत ॥ ४४ ॥
गुरुर्धर्म्माशिषं दत्त्वा, प्रारेभे धर्म्मदेशनाम् । भवादृशो भवारण्ये, पतन्ति किं पुनः परे ? ॥ ४५ ॥

संपदो जलतरङ्गविलोला, यौवनं त्रिचतुराणि दिनानि ।
शारदाभ्रमिव चञ्चलमायुः, किं धनैः परहितं न कुरुध्वम् ॥ ४६ ॥

अर्हद्भक्तिमतां गुरुस्मृतिजुषां क्रोधादिशत्रुद्विषां,
भक्त्या पञ्चनमस्कृतिं च जपतां दानादिकं कुर्वताम् ।
इत्थं सिद्धिनिबन्धनोद्यतधियां पुंसां यशःशालिनां,
श्लाघ्यो मृत्युरपि प्रनष्टरजसां पर्यन्तकालागतः ॥ ४७ ॥

जन्तूना पुण्यत सर्व, शुभ भवति नान्यथा । वेगात्सिध्यति चासाध्यमत्र धीरो निदर्शनम् ॥ ४८ ॥
तद्यथा—नगर्यां पुण्डरीकिण्या, कातरश्चरितैःपुरा। धीरो नाम्नाऽभवद्राजा, पुत्रोऽनभ्यस्तविक्रमः ॥४९॥
धीरत्व नामधेयेन, वर्त्तते तस्य नान्यथा । अतस्त्रपापरो गेहान्नि'ससार कदाऽपि न ॥ १५० ॥
वीरपुत्री प्रिया तस्य, पतिभीरुत्वदूमिता । लज्जमाना सखीवृन्दे, चित्ते दोदूयतेतराम् ॥ ५१ ॥
सेवामलभमानोऽपि, कातरत्वात्स राजसू । ऊचे मधुरवाणीभि , गृहिण्या स्वान्तदुष्टया ॥ ५२ ॥
राज्येऽस्मिन् भवत शौर्यमज्ञायि पुरवासिभि । ततो व्रजान्यदेशेषु, कुरु कस्यापि सेवनाम् ॥ ५३ ॥
यथाऽन्यदेशभूपाला, देहपीनत्वमोहिता । त्वच्चरित्रमजानाना., प्रसाद ददतेऽधिकम् ॥ ५४ ॥
तथेति सर्वशस्त्राणि, सज्जीकृत्य स्वमन्दिरात् । कान्तया दत्तपाथेयो, ययौ देशान्तर प्रति ॥ ५५ ॥
विसृज्य ता पुरीं वेगात्, व्रजन्नन्यायलम्पटै । रुद्धो विख्यातचारितै , सप्तभिः स मलिम्लुचै ॥ ५६ ॥
ऊचे स दीनवाग् भीरु, क्षिपन् वक्त्रे दशाङ्गुली । वास पाथेयशस्त्राणि, गृहीत्वा मा विमुञ्चत ॥५७॥
अनाथाशरण दीनं, कम्पमान भयद्रुतम् । भवता किङ्करीभूत, राजेन्द्रा । किं न मुञ्चत ? ॥ ५८ ॥

गृह्णीत मम सर्वस्वं, विना जीवं दयालवः ! । एकोऽहमेव भर्त्ताऽस्मि, निजजायागृहाङ्गणे ॥ ५९ ॥
ततः सहासं ते चौरास्तत्पराक्रमरञ्जिताः । तं तत्यजुर्वस्त्रशेषं, सकम्पं गजकर्णवत् ॥ १६० ॥
गृहिणीक्षिप्तगरलं, तस्मादासं च शम्बलम् । बुभुक्षितैस्तैर्बुभुजे, यमसेवाचिकीर्षुभिः ॥ ६१ ॥
आहारदोषात्ते चौराः, शिश्यिरे दीर्घनिद्रया । धीरोऽपि विभ्रमभ्रान्तस्तत्सामीप्यमुपाययौ ॥ ६२ ॥
मरुद्धूनितकूर्चांस्तान्, सजीवानेव चिन्तयन् । पुनरेव पलायिष्ट, धीरो दूरं भयातुरः ॥ ६३ ॥
विश्वास्य मामरे धूर्त्ताः, ! गृहीष्यथ भटोत्कटम् । इति काकैः क्षणैकेनापनिन्ये तस्य संशयः ॥ ६४ ॥
वायसावृतदेहानां, मृतानां परिमोषिणाम् । मण्डलाग्रेण मुण्डानि, छित्त्वा कट्यां बबन्ध सः ॥ ६५ ॥
कटीनिबद्धैस्तच्छीर्षैस्तुम्बीफलनिभैस्तदा । तरीतुं दौस्थ्यतटिनीं, स तारक इवाबभौ ॥ ६६ ॥
तच्छस्त्रवस्त्राण्यपि स, समादाय मदोद्धुरः । जगाम हस्तिनापुरं, श्रीहर्षनृपराजितम् ॥ ६७ ॥
राहुरूपसमान्मौलीन्, राजद्वारे मुमोच सः । स्वदोष्णोः पौरुषं राज्ञे, शशंस च सविस्तरम् ॥ ६८ ॥
राजाऽपि दुर्द्धरान् चौरान्, देशोपद्रवकारकान् । अजेयान् निहतान् तेन, वीक्ष्य विभ्रममासदत् ॥ ६९ ॥

सेवा गृहाणेति पृष्ट , स आख्यान्निजविक्रमम् । यादृशे तादृशे कार्ये, न प्रेष्योऽहं नरेश्वर ! ॥ १७० ॥
कष्टे भवच्छरीरस्य, समेते मम पौरुषम् । चमत्कारकर चित्ते, मन्तव्य मनुजेश्वर ! ॥ ७१ ॥
उरीकृत्येति भूपेन, महाऽऽग्रहपुरस्सरम् । वितीर्य लक्ष स्वर्णस्य, स्थापितोऽसौ भटाग्रणी ॥ ७२ ॥
मान्यमान प्रतिदिन, भुञ्जानो भूपतेर्धनम् । आद्यक्षत्रियवर्गस्य, सोऽभूच्छल्यमिवानिशम् ॥ ७३ ॥
इतश्च तस्मिन्नगरे, तस्य कर्म्मविपाकत । दुष्टः पञ्चानन कश्चिच्चकारोपद्रवं महत् ॥ ७४ ॥
स हिनास्ति मनुष्याणा, गोवृन्दाना पुरस्तटे । प्रतोली तद्भयात्तत्र, सायाह्ने दीयते तदा ॥ ७५ ॥
कृपाणपाणयो वीरा, भुजाला ये धनुर्धरा । कृताश्रवास्ते सिंहेन, निन्यिरे यममन्दिरे ॥ ७६ ॥
प्रभूतशोको भूजानिर्मन्त्रिभिर्जगदे कदा । हरिणारे स हन्ता तु, यो लक्ष लभते भट ॥ ७७ ॥
सिहापराधसक्रोधो, नृपो वीराय वीटकम् । समर्प्य केसरिवधमादिशत् शूरदुष्करम् ॥ ७८ ॥
इहार्थे जानितो मात्रा, धीरश्चेतसि चिन्तयन् । वेपमानो भयात्क्रोधान्निजगाद धराधिपम् ॥ ७९ ॥
मादृशाना पशुवध, निर्दिशन् कि न लज्जसे ? । अथवा शूरशूरत्व, याति हु स्वामिसेवया ॥ १८० ॥

एवं ब्रुवाणो वाक्यानि, निर्जगाम पुराद्बहिः । द्वारपालैरपि पुरप्रतोली पिदधे तदा ॥ ८१ ॥
विषादं बिभरामास, स चाकृष्टः पुराद्भटः । अहो निशायां भीमायां, शृगालेभ्योऽपि मे भयम् ॥८२॥
कस्याहं कुत्र गच्छामि, को मेऽस्ति शरणं वने । इति कण्ठागतश्वासो, मुमूर्च्छ च पदे पदे ॥ ८३ ॥
तदुच्चभूरुहशाखामारुह्य रजनीमिमाम् । नेष्यामि नियतं प्रातर्यद्भाव्यं तद्भविष्यति ॥ ८४ ॥
धीरे वृक्षाग्रमारूढे, क्षपायां सोऽपि केसरी । दंष्ट्राविसङ्कटमुखो, त्रस्कुर्वन्नाययौ क्रमात् ॥ ८५ ॥
मृगारिर्नरगन्धेन, यावत्तस्थौ तरोरधः । तावद्धीरकरात्कुन्तो, वेपमानादधोऽपतत् ॥ ८६ ॥
तीक्ष्णाग्रकुन्तघातेन, धीरपुण्येन च द्रुतम् । मर्मविद्धो मृगारातिर्मृत्युमाप मुहूर्त्ततः ॥ ८७ ॥
धीरः प्रभाते वृक्षाग्रादनुत्तरन् सवेपथुः । बोधितः सिंहपञ्चत्वं, वयस्यैरिव वायसैः ॥ ८८ ॥
भीतभीतस्तमादाय, निवृत्तो विभ्रमोद्धुरः । व्याजहार ससंरम्भं, विशेषावादिनो नरान् ॥ ८९ ॥
यात रे ! ब्रूत राजानं, मन्मत्सरधरान् तथा । मत्प्रसादात्पुरं सर्वं, सुखं तिष्ठतु निर्भयम् ॥ १९० ॥
निहत्य सिंहं सबलं, धीरो धीरशिरोमणिः । पुरद्वारमितो देव !, त्वन्मानमभिवाञ्छति ॥ ९१ ॥

कृतो राज्याभिषेकश्च, जयढक्कारवोऽभवत् । आज्ञा प्रवर्त्तिता विश्वे, पुरुषोत्तमभूभुजः ॥ २ ॥
अथ पद्मोत्तरो राजा, दत्त्वा राज्यं स्वसूनवे । हितशिक्षा ददौ सम्यग्, विदग्धैर्भाषितामिति ॥ ३ ॥

यतः—यः क्षोणीं निजकां न रक्षति मुदा वाच्यः स भूपो नृपा,
यः शिष्याय हितानि नोपदिशति प्रायो गुरुर्नेदृशः ।
नापत्यानि निजानि पालयति या माताऽपि सा कीदृशी,
को नामैष पिता न शिक्षयति यः पुत्रं हितार्थीभवन् ? ॥ ४ ॥

अन्यच्च—याता यान्ति महीभुजः क्षितिमिमां यास्यन्ति मुक्त्वाऽखिलां,
नो याता न च याति यास्यति न वा केनापि सार्धं धरा ।
यत्किञ्चिद्भुवि तद्विनाशि सकलं कीर्त्तिः परं स्थायिनी,
मत्वैवं वसुधाधिपैःपरकृता लोप्या न सत्कीर्त्तयः ॥ ५ ॥

बहुभिर्वसुधा भुक्ता, राजभिः सगरादिभिः । यस्य यस्य यदा भूमी, तस्य तस्य तदा फलम् ॥ ६ ॥

प्रजा समावर्जयितु समन्तात्, त्व कोमलैरेव करैर्यतेथा ।
पश्यातिसङ्ख्यैर्दिवि तारकाभिरासेव्यते शीतकरो न भानु. ॥ ७ ॥

एव शिक्षा शुभा दत्त्वा, सुत सस्थाप्य निश्चलम् । स्वय सयममाराध्य, नृप प्राप शिव क्रमात् ॥८॥
श्रीपुरुषोत्तमो भूप , प्राप्य साम्राज्यसम्पदाम् । पितृशिक्षाप्रमाणेन, स्वप्रजा समपालयत् ॥ ९ ॥
यत –पर्जन्य इव भूतानामाधार. पृथिवीपति । विकलेऽपि हि पर्जन्ये, जीवितव्य न भूपतौ ॥२१० ॥
अथान्यदा स भूमीश , सुखशय्यासमाश्रित । तुर्ययामे निशाशेषे, ददर्श स्वप्नमीदृशम् ॥ ११ ॥
पृथ्व्या परिभ्रमन् कस्मिन्, पुरे राजा ययौ रयात् । तस्मिन् परिसरे देवकुले दृष्टा तपस्विनी ॥ १२ ॥
तत्समीपे महाहर्म्ये, प्रधानामेककन्यकाम् । सुरूपा सुभगा दृष्ट्वा, तस्या जात स रागवान् ॥ १३ ॥
तद्रूप चिन्तयन् भूपस्तदा जागरित प्रगे । यावत्ससदि नायाति, मन्त्री तत्राययौ तदा ॥ १४ ॥
सोऽवादीत्सुमति स्वामिन् !, सभा संपूर्यते न किम् । स्वप्नचिन्तापरो राजा, न दत्ते किञ्चिदुत्तरम्॥१५॥
पुन सुमतिनामाऽसौ, सचिव स्माह हे प्रभो !। अद्य चिन्तातुर कस्मात्, दृश्यसे त्व ? तदुच्यताम्॥१६॥

राजा स्माह मया रात्रौ, दृष्टोऽद्य स्वप्न ईदृशः । तस्या रूपेण कन्याया, मोहितोऽस्मि सचिन्तकः॥१७॥
मन्त्र्यूचे देव ! का चिन्ता, स्वप्नदृष्टे हि वस्तुनि । रम्यस्वप्नात् शुभं भावि, स्वप्नः प्रोक्तो ह्यनेकधा॥१८॥

उक्तञ्च—समधातोः प्रशान्तस्य, धार्मिकस्यातिनीरुजः ।
स्यातां पुंसो जिताक्षस्य, स्वप्नौ सत्यौ शुभाशुभौ ॥ १९ ॥

अनुभूतः श्रुतो दृष्टः, प्रकृतेश्च विकारजः । स्वभावतः समुद्भूतश्चिन्तासन्ततिसम्भवः ॥ २२० ॥
देवताद्युपदेशोत्थो, धर्मकर्मप्रभावजः । पापोद्रेकसमुत्थश्च, स्वप्नः स्यान्नवधा नृणाम् ॥ २१ ॥
प्रकारैरादिमैः षड्भिरशुभश्च शुभोऽपि च । दृष्टो निरर्थकः स्वप्नः, सत्यस्तु त्रिभिरुत्तरैः ॥ २२ ॥
रात्रेश्चतुर्षु यामेषु, दृष्टः स्वप्नः फलप्रदः । मासैर्द्वादशभिः षड्भिस्त्रिभिरेकेन च क्रमात् ॥ २३ ॥
निशान्ते घटिकायुग्मे, दशाहात्फलति ध्रुवम् । दृष्टः सूर्योदये स्वप्नः, सद्यः फलति निश्चितम् ॥ २४ ॥
मल(माला)स्वप्नोऽह्निदृष्टश्च, तथाऽऽधिव्याधिपीडितः । मलमूत्रादिपीडोत्थः, स्वप्नः सर्वो निरर्थकः २५॥
प्रधानः पुनरित्यूचे, किं नेत्याभानकः श्रुतः । यद्वृथार्थे जनाः प्राहुः, स्वप्नपृष्ठे प्रधावनम् ॥ २६ ॥

स्वप्नार्थेऽत्र पुना राजन्नेकोदाहरण शृणु । कस्मिन्ग्रामे प्रदेशोऽभून्मठे कार्पटिक पुरा ॥ २७ ॥
एकदा तेन निद्राया, मठी पक्वान्नसभृता । दृष्टा स्वप्ने जजागार, प्रभातेऽचिन्तयच्च स ॥ २८ ॥
अहो ! ममास्ति पक्वान्न, कथ ग्रामो न भोज्यते । ग्राममध्ये ततो गत्वा, जना सर्वे निमन्त्रिता ॥२९॥
भोक्तु तत्रागता लोका , सुप्त कार्प्पटिकस्तदा । जनै पृष्ट कथ सुप्त , स्वप्नवार्त्ता प्ररूपिता ॥ २३० ॥
हसित्वा ते जना सर्वे, गता निजनिजं गृहम् । तत. स्वप्नवशात्तस्य, जने जाता विडम्बना ॥ ३१ ॥
अत स्वामिन्समुत्थाय, राजकार्याणि साधय । स्वप्नचिन्ता परित्यज्य, त्व सुखीभव सर्वथा ॥ ३२ ॥
ततो धराधव प्रोचे, हे मन्त्रिन्मम मानसम् । अत्यन्त बाधते कामो, दुर्जयो यो हि दैत्यवत् ॥ ३३ ॥

यत -तावन्नीतिविनीतत्व, मति शील कुलीनता ।
विवेकौचित्यपाण्डित्य, लज्जा वा तत्त्वनिर्णय ॥ ३४ ॥

तप शमदयादान, ससाराद्भयमित्यपि । सत्य तत्त्व च सन्तोषो, यावन्नो पीडयेत् स्मर ॥३५॥ युग्मम्।
कैवर्त्तीं चकमे परासरमुनिर्गाधि स्वपाकी विधिः, स्वा पुत्री गुरुकामिनी द्विजपति कुन्तीश्च कन्या रवि ।

आभीरीः पुरुषोत्तमः सुरपतिस्तां तापसीं यद्गयात्, तं कन्दर्प्पमदर्प्पमारचयत ब्रह्मास्त्रविस्फूर्जितैः ॥३६॥
यतः—पितुर्वा मातुर्वा स्मरति न कुलं कामविकला, महेला न स्नेहं न गणयति गेहं वरपितुः ।
न पात्रं नापात्रं परिहरति न स्वं च न परम्, कथं वा वैकल्ये विलसति सुचेष्टा विलसति?॥३७॥
विपस्य विषयाणां च, दूरमत्यन्तमन्तरम् । उपभुक्तं विषं हन्ति, विषयाः स्मरणादपि ॥ ३८ ॥
त्वं मन्त्रिन्! सुमतिर्नाम्ना, मतिं काञ्चिद्विचारय । कुरूपायं च कञ्चित्तं, कन्याप्राप्तिर्यथा भवेत् ॥ ३९ ॥
स्वप्नदृष्टसमं तत्र, मन्त्रिणा रचितं पुरम् । तत्समीपे दानशाला, कारिता भोज्यहेतवे ॥ २४० ॥
भोजयित्वाऽत्र पृच्छयन्ते, नरा वैदेशिका इति । ईदृशं नगरं क्वापि, वीक्षितं वा श्रुतं न वा ॥ ४१ ॥
इत्थं प्रकुर्वतस्तस्य, गतः कालः कियानपि । राज्यकार्याणि सर्वाणि, करोति स्म नराधिपः ॥ ४२ ॥
अथान्यदा नरः कोऽप्यागतो देशान्तरादिह । भोजयित्वा च तत्तस्य, मन्त्रिणा दर्शितं पुरम् ॥ ४३ ॥
तद् दृष्ट्वा स रुरोदोच्चैः, मन्त्रिणा भणितं ततः । कथं रोदिषि तद् ब्रूहि, कारणं कौतुकं मम ॥ ४४ ॥
स प्रोचे मे जन्मभूमिरीदृशी नगरी परा । विद्यते तत्र मन्मातापितरौ सचिवेश्वरः ॥ ४५ ॥

अस्मिन् दृष्टे स्मृता साऽद्य, स्मृतौ च पितरावपि । तन्मेऽभून्मानसे दु ख, विरहात्तेन रोदिमि ॥४६॥
मन्त्र्यूचे वद भो पान्थ!, किंनाम्नी क्वास्ति सा पुरी। को भूपस्तत्र वार्त्ता चाऽपूर्वा काचित्प्रवर्त्तते?४७
पथिकोऽवादीन्मन्त्रीश! सुमतेऽस्त्युत्तरापथे । प्रियङ्करा पुरी तत्र, राजा श्रीसत्यशेखर ॥ ४८ ॥
सत्यश्रीरिति तस्यास्ति, पट्टदेवी च देवता । शीलसन्नद्धसर्वाङ्गा, भाग्यसौभाग्यशोभिता ॥ ४९ ॥
तत्कुक्षिसम्भवा पुत्री, कमलश्रीर्विचक्षणा । सीमन्तिनीजने सीमा, सा पुनर्नरमत्सरा ॥ २५० ॥

यत —शशिनि खलु कलङ्क कण्टका पद्मनाले, जलधिजलमपेय पण्डिते निर्धनत्वम् ।
दयितजनवियोगो दुर्भगत्व सुरूपे, धनवति कृपणत्व रत्नदोषी कृतान्त ॥ ५१ ॥

तत्पुर पूर्वदिग्भागेऽस्त्येक देवकुल वरम् । तस्यासन्ने मठे चास्ति, सत्परिव्राजिकाद्वयम् ॥ ५२ ॥
नानाविधमहाविद्यालब्धिसिद्धिविराजिता । मन्त्रतन्त्रादिकपट, सर्वं जानाति चादिमा ॥ ५३ ॥
तन्मठात्पुरतोऽप्यस्ति, रम्यं हर्म्य महोन्नतम् । राजपुत्र्यवसेत्तत्र, पुर मुक्त्वा नरक्रुधा ॥ ५४ ॥
मठे तपस्विनीपार्श्वे, सा करोति गमागमौ । तत्र शिक्षति शास्त्राणि, दक्षा नवनवानि च ॥ ५५ ॥

अन्यच्च—शास्त्राभ्यासाद्विविधविदुषां चित्तमाह्लादयन्ती,
गीतैर्गानादभिमतसखीवर्गमुल्लासयन्ती ।
पद्मापुत्रं सुरभिकुसमैर्नित्यमभ्यर्च्चयन्ती,
चेतःशुद्ध्येष्टदमनुपमं मन्त्रमाराधयन्ती ॥ ५६ ॥
गेहान्तःस्था परिचितसखीलोकमालापयन्ती,
नित्यं हर्षान्मधुरवचनां सारिकां क्रीडयन्ती ।
देशायातानभिवननराञ्नागरान् द्वेषयन्ती,
कञ्चित्कालं स्म नयति मनोऽभीष्टमासादयन्ती ॥ ५७ ॥ युग्मम् ।
यतः—इत्यादिसकलां वार्त्तां, कथयित्वा गतो नरः । ततः सुमतिना सर्वं, स्वरूपं ज्ञापितो नृपः ॥ ५८ ॥
तद्दिने सुमती रात्रौ, ददर्श स्वप्नमीदृशम् । हेममालायुतो राजोत्तरस्या दिश आगतः ॥ ५९ ॥
इत्थं स्वप्नं प्रगे मन्त्री, भूपस्याग्रे न्यवेदयत् । ततो विशेषतो हर्षं, दधाति स्म धराधिपः ॥ २६० ॥

तत सुमतिसयुक्तो, राजा श्रीपुरुषोत्तम । प्रस्तावोचितसामान्यरूपवेपक्रियाधर ॥ ६१ ॥
उत्तरापथदेशं प्रत्यचालीदुत्सुको भृशम् । प्रियङ्करा पुरी तेन, क्रमात्प्राप्ता मनोहरा ॥ ६२ ॥

यत –किं लङ्का किमु देवनायकपुरी कान्ती च किं द्वारिका,
कि वा नागकुमारिकाकृतमिद क्रीडाकृते स्वेच्छया ।
कि देवेन्द्रनिनिर्म्मित किमथवा विद्याधरै कौतुकात्,
सृष्ट सत्पुरसन्न यत्त्रिजगतामाश्चर्यकृद् दृश्यते ॥ ६३ ॥

पुरं रम्य महाहर्म्यं, दृष्ट्वा प्रहर्षितो नृप । तत्र मार्गादिक सर्वं, वेत्ति स्वप्नानुसारत ॥ ६४ ॥
गत्वा तेन मठे तस्मिन्, दृष्ट तत्तापसीद्वयम् । तत्पार्श्वे चोपविष्टा सा, वीक्षिता राजकन्यका ॥ ६५ ॥
ता वीक्ष्य विस्मितो भूपोऽचिन्तयद्रूपमीदृशम् । केन द्रव्यप्रकारेण, निर्म्मित विश्वकर्म्मणा ? ॥६६॥

यत –तारुण्यद्रुममञ्जरी किमथवा कन्दर्पसञ्जीविनी,
किं लावण्यनिधानभूमिरथवा सपूर्णचन्द्रद्युति ।

किं नारी किमु किन्नरी किममरी विद्याधरी वाथ किं,
केयं केन कियच्चिरेण कियता कस्मै कथं निर्म्मिता? ॥ ६७ ॥

चिन्तयन्निति भूपस्तां, यावद्भूयोऽपि पश्यति । शीघ्रमुत्थाय सा तावदीर्ष्ययाऽगान्निजे गृहे ॥ ६८ ॥
प्रणम्य द्वे तपस्विन्यौ, निविष्टो नृपतिस्ततः । आशीःपूर्वं क्षमानाथं, पप्रच्छाद्यां तपस्विनी ॥ ६९ ॥
कुशलं तेऽस्ति हे भद्र!, दृश्यसे त्वं नरोत्तमः । किमर्थं कुत आयातः?, क्व यास्यसि वद स्फुटम् २७०
पुनर्नत्वा नृपोऽवादीदायातः पद्मिनीपुरात् । द्रष्टुं देशान्तरं पृथ्व्यां, विमोदेन भ्रमाम्यहम् ॥ ७१ ॥
ततो राजाऽशनं पानं, खादिमं स्वादिमं तथा । चतुर्धाऽऽहारमेतस्यै, ददौ वस्त्रादिकं पुनः ॥ ७२ ॥
ततः सार्धं प्रधानेन, गत्वा भूपः सरोवरे । अङ्गं प्रक्षाल्य भुङ्क्त्वा च, स्वयं चागात्सुरालये ॥ ७३ ॥
नमस्कृत्य सुरं भक्त्या, सुप्तस्तत्र सुखेन च । अत्रान्तरे सभार्योऽत्र, खेचरः कोऽपि चागतः ॥ ७४ ॥
वाटिकायां प्रियां प्रेष्य, पुष्पानयनहेतवे । आगाद्देवकुले स प्राक्, सुप्तं भूपं ददर्श च ॥ ७५ ॥
तं दृष्ट्वा खेचरो दध्यौ, अहो कोऽयं नरोत्तमः । रूपं निरुपमं चास्य, नेदृशं क्वापि दृश्यते ॥ ७६ ॥

मद्भार्यैन नरं दृष्ट्वा, दुर्विकल्पान् विधास्यति । अस्मिन् रक्ताऽतिरूपेण, विरक्ता मयि भाविनी ॥७७॥
नितम्बिन्या असत्यत्व, चञ्चलत्व स्वभावत । माया पुनरविश्वासो, वनिता विश्वमोहकृत् ॥ ७८ ॥
योषितो मनस शेपद्रव्येण विदधे विधि । करिकर्णतडिज्ज्योतिःखलप्रेमरमास्थिती ॥ ७९ ॥
यत्कर्म्म कर्तुं नियतिर्नालभूष्णुरवेक्षयते । तन्नार्यो हेलया कुर्युर्महिषीव सुशर्म्मण. ॥ २८० ॥

तत्कथा चेयमुच्यते ।

मालवोऽस्ति ययाऽनन्ता, प्रिय धत्ते समन्तत । ऋद्धिस्फारा गुणाधारा, धारानाम महापुरी ॥ ८१ ॥
द्विगुण पक्षशुद्ध्याऽभूत्, शैशवात्त्रिगुणस्तथा । आसीत्कलाभिर्यल्लोकश्चन्द्रात्सार्धचतुर्गुण ॥ ८२ ॥
तत्राऽरिदमन काम, भूपिताऽशेपभूतल । सुशर्म्मा य सुपर्वेव, सुशर्म्मा नाम पार्थिव ॥ ८३ ॥
तच्चित्तकरिवारीव, रतिरूपविजित्वरा । तस्यासीन्महिषी मान्या, मृगनेत्रा मृगावती ॥ ८४ ॥
सा भूपवर्जमन्येषा, नराणा वदनान्यपि । न पश्यति स्म नियत, सतीव्रतविधित्सया ॥ ८५ ॥
बुभुजेऽन्नान्यपि न सा, यानि स्युर्नरनामभि । इत्थ मायाविनी राज्ञी, हृज्जग्राह नरेशितु ॥ ८६ ॥

 ॥१६१॥

दीपोत्सवदिने लोका, भूपतेरुपदाकृते । आनिन्युश्चित्रवस्तूनि, स्वस्ववंशोचितानि च ॥ ८७ ॥
निर्णेजयित्वा नीरेण, विशदां तारपत्रवत् । भूपाय ढौकयामास, मीनमालां च धीवरः ॥ ८८ ॥
तां भूपप्रेषितां मालां, वीक्ष्य राज्ञी जगौ रुषा । मत्स्याः पुरुषनामानस्तेन नाहं विलोकये ॥ ८९ ॥
वाक्येन तेन तत्रैकस्तिमिरट्टाहसीत् ततः । सञ्जातविस्मया राज्ञी, विषसाद स्वचेतसि ॥ २९० ॥
ज्ञातुं तन्मत्स्यवृत्तान्तं, न भुङ्क्ते स्म मृगावती । गताशुरपि मीनोऽसौ, विरराम न हासतः ॥ ९१ ॥
न तत्र ज्ञानशास्त्रज्ञो, न ज्ञानी न च भूतवित् । अन्योऽपि कोऽपि धीधुर्यो, मीनहास्यं विवेद नु ॥९२॥
स्त्रीग्रहेण नरेन्द्रोऽपि, पण्डितानित्यभाषत । यन्त्रे निपीडयिष्यामि, ब्रूत वा हास्यकारणम् ॥ ९३ ॥
पशुवद्वाटके क्षिप्ताः, पण्डिताः क्षीणबुध्धयः । ययाचिरे ते दिवसत्रयं भूपतिभीरवः ॥ ९४ ॥
भीतानुद्वीक्ष्य तान् काचिदब्रवीत् पण्डितस्नुषा । महिषीं बोधयिष्यामि, यूयं मा कुरुताधृतिम् ॥९५॥
ततो विनीता सा राजगृहिणीं निविडाग्रहाम् । सामवाक्यैर्मर्मभिद्भिः, सान्त्वयामास दम्भिनी ॥९६॥
यथा यथा सुवाग्नीरैरभ्यषिञ्चन्नृपप्रियाम् । तथा तथा सा काठिन्यं, सणग्रन्थिरिवादधौ ॥ ९७ ॥

देवि । गृह्णन्ति कार्यस्य, ये पार पुरुषाधमाः । ते सीदन्ति क्षणादेव, मूर्खद्विजसुताविव ॥ ९८ ॥
को तौ द्विजसुतौ मुग्धे !, पृष्टा सा भावकोविदा । महिष्या प्रतिबोधार्थमाचचक्षे कथामिमाम् ॥९९॥
नन्दिग्रामे द्विज कश्चित्तस्य स्त स्तनयावुभौ । तौ भिक्षया स्वदिवसानतिचक्रमतु क्रमात् ॥ ३०० ॥
एकदा क्वापि गच्छन्तौ, करम्बपुटवाहिनीम् । वाहिनीं वीक्ष्य तौ विप्रो, मुदा गाढ ननर्त्ततु ॥ १ ॥
करम्बकं तु तत्रैव, भक्षयन्तो बुभुक्षया । कदेति दध्यतुश्चित्ते, कुतोऽसौ पुटिकागम ॥ २ ॥
नदीतटेन यान्तौ तौ, नरमेक ददर्शतु. । मोचयन्त पत्रपात्रीं, करम्बकभृता जले ॥ ३ ॥
ताभ्यामागत्य तत्पार्श्वे, पुटिकामोक्षकारणम् । पृष्ट निवेदित तेन, यथातथ्य तयोदितम् ॥ ४ ॥
मदीयभर्तुरुदरे, व्रणमास्ते सवेदनम् । अत पीडोपशान्त्यर्थं, करम्बस्तत्र वध्यते ॥ ५ ॥
यथा नोल्लङ्घते कोऽपि, वाहिन्या वाह्यते तत. । श्रुत्वेति तन्मुखाद्वृत्त, विषाद प्रापतुर्द्विजौ ॥ ६ ॥
घिगिद किं कृत कर्म्म, सर्वजनविगर्हितम् । अतो विपण्णौ तौ नद्या, पतित्वा मृत्युमापतु. ॥ ७ ॥
कार्यस्य कारणं तस्मान्न द्रष्टव्य नृपप्रिये ! । विमर्शय कथामेना, भाषिष्ये गद् हसन्त्यमी ॥ ८ ॥

इत्थं कथासुदृष्टान्तैर्मासमेकं नृपप्रिया । बोधिताऽपि हि नाबोधि, यतः स्त्रीषु कुतो मतिः ? ॥ ९ ॥
मत्वा वारितवामां तां, वधूस्तत्र नृपाज्ञया । गर्त्तामखानयत्पृथ्वीं, हास्यसङ्केतहेतवे ॥ ३१० ॥
समाहूय मृगावत्या, दासीवृन्दं च सावदत् । रेरे शृणुत मद्वाक्यं, सुधारससहोदरम् ॥ ११ ॥
क्षिप्तो यस्या दृषत् शीघ्रं, गर्त्तातीरं गमिष्यति । तस्य दास्यति हृष्टात्मा, मुक्ताहारं महीपतिः ॥१२॥
तत्रैकवर्जं सर्वासां, गर्त्तान्तर्दृषदोऽपतत् । ततो राज्ञीं वधूः प्राह, विद्धयेनं त्वं निदर्शनम् ॥ १३ ॥
सरोषा राजरमणी, हृन्नेत्रान्धा पुनर्जगौ । वद द्राग् मीनहासस्य, कारणं दुःखवारणम् ॥ १४ ॥
वक्ष्येऽहं ह्यस्तनदिने, देवि ! चिन्तय चेतसा । सुभगं गुप्तमेव स्यात्, कार्यं नारीवराङ्गवत् ॥ १५ ॥
द्वितीयेऽपि दिने बुद्ध्वा, राजपत्नीं कृताग्रहाम् । भूपालमालपद्विप्रवधूः सुदृढमानसा ॥ १६ ॥
देव्याश्चेटीः समग्रास्त्वं, विवस्त्राः कुरु भूपते ! । यथा जानासि मीनस्य, हसनं वचनं विना ॥ १७ ॥
कुर्वन् तदुक्तं साश्चर्यं, तमेकं पुरुषं दृशा । ददर्श श्यामलतनुं, हीनवंशं विशांपतिः ॥ १८ ॥
स्वामिन्नसौ स्त्रीवेषेण, भुङ्क्ते देवीं मृगावतीम् । तेन मीनो महीनाथ !, देवीवाचाऽहसद्भृशम् ॥ १९ ॥

तदस्मान् शुभ्रवपुप , कथ त्यजसि लपटे ।। त्वदीय चरितं सर्वं, वर्ज्य जानीमहे यत ॥ ३२० ॥
इति प्रत्यक्षदृष्टान्तात्, कुपितो वसुधाधिप । राज्ञीमाकर्पयामास, सम तेनापराधिना ॥ २१ ॥
दु खखानिरगाधेयं, कलेर्मूल भयस्य च। पापबीज शुचा कन्दोऽनभ्राऽशनिर्नितम्बिनी ॥ २२ ॥
ननु सन्ति जीवलोके, काश्चिच्छमशीलसयमोपेता । निजवशतिलकभूता , श्रुतसत्यसमन्वि-
ता वनिता ॥ २३ ॥

यावन्नायाति मे नारी, तावत्काञ्चित्करोम्यहम् । उपायं प्रथम येन, पश्चात्तापो भवेन्न मे ॥ २४ ॥
ध्यात्वैवं खचरेणाथ, सप्रभावा महौपधी । समानीय द्रुत वद्धा, सुप्तस्य नृपते करे ॥ २५ ॥
तत्प्रभावात् क्षणेनैव, नारीरूपो नृपोऽभवत् । कृत्वैव खेचरो मध्ये, ययौ देवार्चनाकृते ॥ २६ ॥
अथ विद्याधरा तस्य, भार्या तत्रागता तदा । स नृप प्रमदारूपधर सुप्तस्तयेक्षित ॥ २७ ॥
देवकन्यासमं वीक्ष्य, तद्रूप विस्मिता हृदि । चिन्तामिति चकारासौ, खेचरी तुच्छमानसा ॥ २८ ॥
मुक्त्वा हि मामिमा नारीं, वल्लभो मे करिष्यति । पुरुपा भ्रमरा एव, वर्पयन्ते वसुधातले ॥ २९ ॥

नराणां चञ्चला दृष्टी, रम्यारम्येषु तिष्ठति । कृत्याकृत्यं न जानन्ति, ते कामेन विडम्बिताः ॥३३०॥

यतः—स्नुषां प्रसूं सुतां धात्रीं, गुरुपत्नीं तपस्विनीम् ।
तिरश्चीमपि कामार्त्तो, नरः स्त्रीं भोक्तुमिच्छति ॥ ३१ ॥

अह्नाय वह्नौ विह्वो विशन्ति, शस्त्रैः स्वदेहानि विदारयन्ति । तपांसि कृच्छ्राणि समाचरन्ति, रागादि-
वीरान् विरला जयन्ति ॥ ३२ ॥

दृष्टाश्चित्तेऽपि चेतांसि, हरन्ति हरिणीदृशः । किं पुनस्ताः स्मितस्मेरविभ्रमभ्रमितेक्षणाः ॥ ३३ ॥

यतः—सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः ।
स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥ ३४ ॥

एवं ध्यात्वा तयाप्येकां, समानीय महौषधीम् । वामांह्रौ कृष्णसूत्रेण, बद्ध्वा कुब्जीकृतो नृपः ॥ ३५ ॥

विधायैवं सुरं नत्वा, खचरीखेचरौ गतौ । भूपो जागरितोऽपश्यत्, कुब्जीभूतं निजं वपुः ॥ ३६ ॥

निजाङ्गं वीक्षमाणेन, दृष्टं तमौषधीद्वयम् । विस्मितः प्रथमं पादात्, छोटयामास तां नृपः ॥ ३७ ॥

मुक्त्वा कुब्जत्वमात्मान, नारीत्व पश्यति स्म स.। पुन. स्वरूपवान् जातश्छोटयित्वा करोपधीम् ॥३८॥
ज्ञात्वा तत्तत्प्रभव तद्गुप्तीकृत्य जटीद्वयम् । उत्थाय भूपतिर्भूयो, गत. प्रव्राजिकामठे ॥ ३९ ॥
कृत प्रश्न तपस्विन्या, कथ चिन्तातुरोऽसि भोः।। का चिन्ता तव चित्तेऽस्ति, ता प्ररूपय मा प्रति॥३४०॥
तस्या अग्रे नृपेणाथ, स्वरूप स्वप्नसम्भवम् । प्रोक्त्वा प्रोचे च कन्याया, प्राप्ते चिन्तास्ति मेऽधुना॥४१॥
ततस्तपस्विनी प्रोचे, सा नारी नरमत्सरी । पुरुषेण सम क्वापि, न करोत्येव भाषणम् ॥ ४२ ॥
नृपेणोक्तमह मातर्म्मानिनीरूपमाश्रितः । तया सम वाग्विलास, विधास्यामि तवाज्ञया ॥ ४३ ॥
तच्छ्रुत्वा तापसी प्रोचे, शक्तिस्तेऽस्ति यदीदृशी । तव सेत्स्यति कार्यं तत्कोऽप्युपायोऽस्ति नापरः ॥४४॥
ततो दिने द्वितीये स, विधाय वनितावपु । तपस्विन्याश्रमे गत्वा, नत्वा चैनामुपाविशत् ॥ ४५ ॥
अत्रान्तरे कमलश्रीरागता तन्मठे त्वरात् । भक्तिपूर्वं नमस्कृत्य, तापसी प्रति चाब्रवीत् ॥ ४६ ॥
एषा का दृश्यते रामा, कुत' स्थानादिहागता । रम्यरूपा किमर्थञ्च, स्थिता युष्माकमन्तिके ॥ ४७ ॥
सा वृद्धा तापसी स्माह, सुभगे! शृणु मे वच. । सुलोचनाभिधानेय, मदीया भ्रातृनन्दनी ॥ ४८ ॥

मन्मिलनाय सोत्कण्ठा, पद्मिनीपुरतोऽधुना । समायाता च पार्श्वे मे, दिनान् स्थास्याति कत्यपि ॥४९॥
श्रुत्वैवं कमलश्रीः सा, तां परिव्राजकीं जगौ । मातस्ते कथ्यते किञ्चिन्मदुक्तं यदि मन्यसे ॥३५०॥
तव या भ्रातृजा सा मे, भगिनी तदिमां मम । पार्श्वे मुञ्च यथा यान्ति, दिवसा वार्त्तया सुखम् ॥८१॥
तपस्विन्युपदेशेन, तया नीता निजे गृहे । द्वे अपि क्रीडतः प्रीत्या, गोष्ठीश्च कुरुते मिथः ॥ ५२ ॥
भोजनादि तया सार्कं, कुरुते राजनन्दनी । तपस्विन्याश्रमे सार्द्धं, ते च यातः प्रमोदतः ॥ ५३ ॥
कुरुते सत्कलाभ्यासं, मिथः स्नेहविमोहिते । कतिचिद्वासरानेवं, गमयामासतुः सुखम् ॥ ५४ ॥
सुलोचनान्यदाऽवादीत्प्रीत्यां राजसुतां प्रति । कथं मातृपितृभ्यां ते, नोद्वाहो यौवने कृतः ॥ ५५ ॥
रूपं रम्यं वयो नव्यमस्ति विज्ञानकौशलम् । आरोग्यं तर्हि तारुण्यं, त्वं हारयसि किं मुधा ? ॥८६॥
ततो नृपसुताप्याख्यत्, बाष्पसंपूर्णलोचना । मम चेद्भव्यभगिनी, तत्त्वं पुंनाम मा वद ॥ ५७ ॥
ऊचे सुलोचना भद्रे !, पुरुषद्वेषकारणम् । वद यत्कौतुकं मेऽस्ति, कन्योचे श्रृणु सुन्दरि ! ॥ ५८ ॥
पितृपट्टगजे दृष्टेऽभूज्जातिस्मरणं मम । ज्ञात्वा प्राग्भवजां वार्त्तां, जाताहं नरमत्सरा ॥ ॥ ५९ ॥

नारीरूपधरो भूप, पुन पप्रच्छ कुञ्जरे। दृष्टे कथ नरद्वेप, प्राग्भव कीदृशश्च ते ॥ ३६० ॥
कमलश्रीस्ततोऽभाणीत्, शृणु त्वं हे सुलोचने ! । मम पूर्वभव येन, जाताह नररोषिणी ॥ ६१ ॥
मलयाद्रौ महाटव्या, माणिभद्राभिध॰ करी । प्रियङ्करीति नाम्नाऽभूत्करिणी तस्य च प्रिया ॥ ६२ ॥
स्वेच्छया क्रीडतस्तौ द्वौ, मिथ प्रेमपरायणौ । अन्यदा दैवयोगेन, दवो लग्नो महान् वने ॥ ६३ ॥
तत्राटव्या स्थण्डिलानि, पञ्च सन्ति पुरा तदा । तृणवृक्षविहीनानि, दवदु ख हि तत्र न ॥ ६४ ॥
दव दृष्ट्वा स नागेन्द्र॰, प्रनष्ट करिणीयुत । प्राक् स्थण्डिले गतौ यावत्तावत्तत्पूर्णमङ्गिभि॰ ॥ ६५ ॥
अग्निभीतान् वनचरान्, तत्र तान् वीक्ष्य हस्तिराट् । कृत्वा तेषा दयां मुक्त्वा, स्थण्डिल तत्पुरो ययौ ६६॥
एव दृष्ट्वा स्थण्डिलेषु, द्वितीयादिषु देहिन । स हस्ती हस्तिनीयुक्तो, गत॰ पञ्चममण्डले ॥ ६७ ॥
तदप्यरण्यजैर्जीवै, शशपङ्क्तिमृगादिभि । पूर्णं दृष्ट्वा प्रियायुक्तस्तस्य कूणे स्थितो गज॰ ॥ ६८ ॥
दावाग्निर्विषमो जातो, वातेन प्रेरित पुन॰ । तेनारण्य निमेषेण, कृतं प्रज्वाल्य भस्मसात् ॥ ६९ ॥
वनानि दहतो वह्ने॰, सखा भवति मारुत । स एव दीपनाशाय, कृशे कस्यास्ति सौहृदम् ? ॥३७०॥

विध्वस्ता मृगपक्षिणो विधुरतां नीताः स्थली देवता, धूमैरन्तरिताः स्वभावमलिनैराशा मही तापिता ।
भस्मीकृत्य स पुष्पपल्लवलतानेतान्महापादपानुद्वृत्तेन दवानलेन विहितं वाल्मीकशेषं वनम् ॥७१॥
स्थण्डिलान्तःस्थिताक्रान्ता, दैवाद्दावेन हस्तिनी । नष्टो दवभयाद् हस्ती, दह्यमानां विमुच्य ताम् ॥७२॥
मुखं लात्वा निजं जीवं, करे कृत्वा सुवेगतः । पतिं पलायितं वीक्ष्य, करिणी कोपमादधौ ॥ ७३ ॥
पुनश्चित्तं तया स्वस्थं, विहितं क्रोधशान्तितः । पूर्वं मुनिप्रसङ्गाच्च, जाताऽस्याः पुण्यलन्मतिः ॥ ७४ ॥
तद्वने श्रीयुगादीशजिनप्रासाद उत्तमः । पुरा दृष्टस्तदा चित्ते, स स्मृतो भाग्यतस्तया ॥ ७५ ॥
नमस्कारप्रभावश्च, श्रुतो मुनिमुखात्तया । सान्ते तद्ध्यानतो मृत्वा, दवदग्धा दिवङ्गता ॥ ७६ ॥
भुक्त्वा स्वर्गसुखं च्युत्वा, सा जाताऽहं नृपाङ्गजा । दृष्टे गजेऽत्र मे जातिस्मृतिर्जाता सुलोचने ! ॥७७॥
मां ज्वलन्तीं दवे मुक्त्वा, गजो नष्टः स निष्ठुरः । नरा एवंविधाः क्रूरास्तन्मुखं वीक्ष्यते कथम् ? ॥ ७८॥
स्वर्गभोगा मया भुक्ता, मेरुतुल्या हि हे सखि ! । तत्किं सर्षपसदृशैर्मानुषैस्तृप्यते मनः ? ॥ ७९ ॥
काव्यम्— असुरसुरपतीनां यो न भोगेषु तृप्तः, कथमिह मनुजानां तस्य भोगेषु तृप्तिः ? ।

जलनिधिजलपानाद् यो न जातो वितृष्णस्तृणशिखरगताम्भ.पानत· किं स तृप्येत्॥८०॥

विषयसुखं दुग्धमिवास्वादयति जनो विडाल इव मुदित ।

नोत्पाटितलकुटमिवोत्पश्यति यममहह किं कुर्म· ॥ ८१ ॥

ध्याने किं गुरुभि परै किमगुरुभिस्तैस्तैस्तपोभिर्वरै, किञ्चान्यैरपि देवतादिविषयस्तोत्रै· प्रपञ्चै कृते ।
भ्रातश्चित्त! पर सुख स्पृहयसि त्व चेत्तदा दूरतो, वातान्दोलितलोलदीपकशिखा मित्राणि कामास्त्यज ८२

प्रिया प्रेमपरा मुक्त्वा, ज्वलन्तीं यद्गत· करी। पुरुषार्थं स किं श्रेष्ठ, स नरो मन्यते कथम् ? ॥८३॥

सुलोचनाऽवदन्नार्य्या, कन्यात्व भविता चिरम्। एव तदाग्रहाद् भूय·, कमलश्रीरिद जगौ ॥ ८४ ॥

यदि प्राग्भवभर्त्तार, क्वापि जानामि तद्गुणान्। दृष्ट्वा कदाचिदप्येन, स्नेहात्परिणयाम्यहम् ॥ ८५ ॥

इत्थ निशम्य भूपस्त्री, चिन्तासागरसङ्गता। सा जातिस्मरण प्राप, ज्ञात पूर्वभवो निज ॥ ८६ ॥

अन्येद्यु तापसीपार्श्वे, गत्वा भूपतिकाम्यया। कन्या या चात्मन· पूर्वभववृत्त निवेदितम् ॥ ८७ ॥

तपस्विन्या ततस्तच्च, चरित्र चित्रपट्टके। लेखित लिखिता तत्र, साटवी दवसयुता ॥ ८८ ॥

प्रियां प्रज्वलितां प्रेक्ष्य, गतोऽनागो म्बुहेतवे । नीरमानीय तां दग्धां, सिञ्चति स्म द्रुतं करी ॥ ८९ ॥
पुनर्याति तथाऽऽयाति, नीरं नीत्वा स वेगतः । एवं गमागमौ कुर्वन्, दवदग्धो मृतो गजः ॥ ३९० ॥
कृतानि हस्तिहस्तिन्योरेवं रूपाणि पट्टके । शिक्षां दत्त्वा ददौ राजा, पट्टं सुमतिमन्त्रिणे ॥ ९१ ॥
तेन चतुष्पथे पट्टो, मण्डितो महिमान्वितः । किमेतदिति यः कोऽपि, पृच्छेत्तदेति वक्त्यसौ ॥ ९२ ॥
मत्स्वामिचरितं ह्येतन्महाश्चर्यविधायकम् । परम्परागता पट्टवार्त्ताऽथ कन्यया श्रुता ॥ ९३ ॥
आकारितस्तया तत्रागतोऽसौ पट्टहस्तकः । दृष्टश्च चित्रितः पट्टोऽटवी दृष्टा दवान्विता ॥ ९४ ॥
दृष्टानि गजरूपाणि, ज्ञातं तद्वृत्तमात्मनः । सा तं पूर्वपतिं वीक्ष्य, रुरोदोच्चैः पुनः पुनः ॥ ९५ ॥
अग्निदग्धं गजं दृष्ट्वा, मुक्त्वा च नरमत्सरम् । दध्यौ सा मम कार्ये हा, स्नेहबद्धो मृतः पतिः ॥९६॥
स्नेहो मूलमनर्थानां, स्नेहः दुःखपरम्परा । स्नेहेन सहते जन्तुर्मथनं दधिवत्सदा ॥ ९७ ॥

यतः—प्रियाकृते शृङ्खलतां मुरारिः, शशी कलङ्कं रविरङ्गतक्षाम् ।
देहार्द्धतां शम्भुरुरीचकार, प्रेम्णो विकारः खलु दुर्निवारः ॥ ९८ ॥

सीदन्तु स्वजना हसन्तु पिशुना शोचन्त्वमी बान्धवा,
आरोहन्त्वसवस्तुला नयविदो निन्दन्तु यान्तु श्रिय ।
सेव्योऽभीष्टजनस्तथापि रभसा नि शङ्कमुच्चैर्यतो,
युक्तायुक्तविचारणा यदि भवेत् स्नेहाय दत्त जलम् ॥ ९९ ॥

न दृष्टोऽथ पति सिञ्चन्, दावपीडितया मया। धिग् मा मया कृतो द्वेप, प्रायो नार्योऽल्पबुद्धय ॥४००॥
ध्यात्वैव स तया पृष्ट, केनचित्तेऽर्पित ह्यद । तेनोक्त शृणु मे स्वामी, राजाऽस्ति पद्मिनीपुरे ॥ १ ॥
पुरुपोत्तमनामा स, जातिस्मृत्याऽवगम्य च । पट्टेपु लेखयामास, चरित्र पूर्वजन्मन ॥ २ ॥
निजप्राग्भवभार्याया, ज्ञानार्थं मतिमोहत । सर्वत्र राज्यसस्थाने, ते पट्टास्तेन प्रेषिता ॥ ३ ॥

यत —कर्माणि सर्वाणि च मोहनीये, दु.खानि सर्वाणि दरिद्रतायाम् ।
पापानि सर्वाणि च चौर्यभावे, दोपा अशेपा अनृते भवन्ति ॥ ४ ॥

जाग्रतामपि निन्द्रा य., पश्यतामपि याऽन्धता । श्रुते सत्यपि जाड्य यत्, सप्रकाशे च यत्तमः ॥५॥

दाराः परिभवकारा, बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य मोहो, ये रिपवस्तेषु सुहृदाशा ६
अतः प्राग्भवजो मोहो, मोचितोऽपि न मुञ्चति । तेनाहं पट्टमादाय, स्वामिवाक्यादिहागतः ॥ ७ ॥
ततो हर्षभरात्सोचे, जातिस्मृत्येति वेद्म्यहम् । सैव हस्तिन्यहं जाता, प्राक्पतिर्मे नृपः स तु ॥ ८ ॥
सा तस्मिन् रागिणी प्रोक्त्वा, सम्बन्धं पितरं जगौ । पद्मिनीपुरभूपेन, समं मां त्वं विवाहय ॥ ९ ॥
हृष्टचित्तेन राज्ञाऽथ, कृता सामग्रिकाऽखिला । महर्ध्या सर्वसारेण, सुबुद्धिसचिवान्विता ॥ ४१० ॥
शुभेऽह्नि कमलश्रीः सा, प्रहिता तां पुरीं प्रति । क्रमात् सुलोचनायुक्ता, प्राप्ता च पद्मिनीपुरम् ॥११॥
तत्रोद्याने पटकुट्यां, स्थिता सैन्यसमन्विता । पुरे प्रकटिता वाणी, कन्याऽऽयाता स्वयंवरा ॥ १२ ॥
सुमतिः प्राक् पुरे गत्वा, वाद्यनिर्घोषपूर्वकम् । ससैन्यः सन्मुखं गत्वा, तस्या आतिथ्यमातनोत् ॥१३॥

यतः—उत्तिष्ठन्ति निजासनान्नतशिरः प्रच्छन्ति च स्वागतं,
सन्तुष्यन्ति हसन्ति यान्ति च चिरं प्रेमाञ्चितां सङ्गतिम् ।
सिञ्चन्तो वचनामृतेन हृदयं सन्तः समीपागते,

कि वा न प्रियमप्रियेऽपि हि जने कुर्वन्ति जल्पन्ति च ॥ १४ ॥

स्वगृहेऽह गमिष्यामीत्युक्त्वा राजसुता प्रति । नारीरूपधरो भूपोऽप्याजगाम पुरान्तरे ॥ १५ ॥
छोटयित्वा जटा भूपो, बभूव निजरूपवान् । राजानमागत ज्ञात्वा, चक्रे पुर्यां जनैर्मह ॥ १६ ॥
सकला मन्त्रिसामन्ता, आगत्य प्रणिपत्य च । नृप वर्द्धापयामासुर्हर्षपूरितमानसा ॥ १७ ॥
अथास्थान समाश्रित्य, ज्योति शास्त्रविद द्विजम् । आकार्य च विवाहस्य, लग्न पप्रच्छ भूपति ॥१८॥
तेनालोक्य शुभं चाष्टादशदोषविवर्जितम् । रेखाशुद्ध बलोपेत, दत्तं लग्न निशामुखे ॥ १९ ॥
सुमतिश्च सुबुद्धिश्च, द्वौ मिलित्वा प्रमोदत । सामग्री चक्रतु सर्वां, विवाहे वरकन्ययो ॥ ४२० ॥
मनोरथशतै सार्ध, भूभुजा पुण्ययोगत । दृष्टा स्वप्नेऽपि सा साक्षात्, परिणीता हि पद्मिनी ॥ २१ ॥
मासमेकं महोत्साहात्, सम्मान्य स्वजनान्नृप । यथायोग्य ददौ तेभ्यो, वस्त्रालङ्करणादिकम् ॥ २२ ॥
सुबुद्धिसचिवाद्या ये, येऽन्ये प्राघूर्णका अपि । सम्पूज्य परया भक्त्या, तान् सर्वान् विससर्ज स ॥२३॥
पूर्व पद्मावती पट्टदेवी राज्ञोऽभवद्यथा । लब्धा स्वप्नानुसारेण, कमलश्रीरभूत्तथा ॥ २४ ॥

रतिप्रीतिसमानेन, तेन भार्याद्वयेन सः । राजा रराज सद्रूपः, कान्दर्प इव मूर्तिमान् ॥ २५ ॥
पद्मिनीहस्तिनीमेधास्तस्या जाताः प्रियाः पराः । सार्द्धं ताभिर्बुभोजासौ, भोगान् राज्यं च चक्रिवत् ॥२६॥
प्राग्जन्ममोहतो राज्ञो, विशेषात् कमलश्रियाम् । रागोऽभूत्तेन न प्राप, स रतिं तां विना क्वचित् ॥२७॥
राज्यं पालयतस्तस्य, न दुर्भिक्षं न विड्वरम् । न दुःखं नैव चान्यायो, न पापं चाभवद्भुवि ॥ २८ ॥
न्यवारयदसौ सप्त, व्यसनान्यवनीतले । सप्तक्षेत्रेषु वित्तानि, वपति स्म सुवित्तवान् ॥ २९ ॥
तस्याथ भुञ्जतो भोगान्, घनः कालो गतस्ततः । पद्मावती कमलश्री, पत्न्यौ गर्भं च बभ्रतुः ॥४३०॥
पुत्रौ क्रमाद् द्वयोर्जातौ, पित्रा हर्षेण सोत्सवम् । श्रीषेणो हरिषेणश्चेति नाम्नी विहिते तयोः ॥३१॥
पूर्वं तौ लालितौ पश्चात्, पाठितौ सकलाः कलाः । क्रमात् प्रवर्धमानौ च, प्रापतुर्यौवनं वरम् ॥३२॥
यतः—बाल्ये शास्त्रकलापरिश्रमपरः शिक्षावपुःपोषकस्तारुण्ये विभवार्ज्जनश्च विषयी पित्रोः परं पालकः । धर्म्मिष्ठश्च मनोविकारविरहत्स्वच्छेन्द्रियो वार्द्धकेऽपीदृक्षस्तनयो भवेदिह परत्रासङ्ख्यसौख्याय वै॥३३॥
द्वावपि भ्रातरौ तौ हि, रामलक्ष्मणवत्सदा । परस्परं प्रेमबद्धौ, भुञ्जाते क्रीडतः सह ॥ ३४ ॥

यत'—कान्तारे व्यसने विवादकलहे दु खे सुखे सङ्गरे,
यात्राया व्यवहारकर्म्मणि कुलाचारे विवाहक्रमे।
अन्यत्रापि शुभाशुभेपु विधिपु प्राय. सहाय सदा,
यस्तस्मै निजवन्धवे स्पृहयति स्वैर न कि वान्धव ? ॥ ३५ ॥

सर्व्वमप्याप्यते वस्तु, पौरुपेण धनेन वा । न भ्राता प्राप्यते क्वापि, पुण्यवान् विनयी गुणी ॥ ३६ ॥
अथ तन्नगरासन्ने, वने भूरिगुणान्वित । आगात् श्रीसम्भव सूरिर्दूरीकृततमोभर ॥ ३७ ॥
प्रासुक स्थण्डिल प्रेक्ष्य, शिष्यसप्तशतैर्वृतः । तत्र स्थितश्चतुर्ज्ञानी, चतुर्धा धर्मभापक. ॥ ३८ ॥
उद्यानपालकाद् ज्ञात्वा, गुरोरागमन नृपः । आगत्य चानमत् सूरिं, शुश्रावेति च देशनाम् ॥ ३९ ॥
भो भव्या ! भवपाथोधौ, विरसे कश्मलाविले । एक. प्रशस्यते धर्मश्चिन्तामणिरिवामल' ॥ ४४० ॥
निर्द्वेपो व्यसनेपु साधुपु महाप्रीतिर्गुणेष्वादर , सद्विद्यासु रति. सुभापितरसास्वादेपु कौतूहलम् ।
शक्ति सूक्तिकृतौ परार्त्तिशमने यत्नो जिनाराधने, तात्पर्यं जगतीह कस्यचिदहो धन्यस्य सम्पद्यते ४१

समत्वं भज भूतेषु, निर्ममत्वं विचिन्तय । अपाकृत्य मनःशल्यं, भावशुद्धिं समाश्रय ॥ ४२ ॥
श्रुत्वेति देशनां राजा, भृशं वैराग्यरञ्जितः । पृच्छति स्म निजं पूर्वभवं पुण्यं च यत्कृतम् ॥ ४३ ॥
गुरुरूचे महीनाथ !, शृणु जन्मान्तराणि ते । यत्तपसाऽर्जितं पुण्यं, स्फुटं तत्कथयामि ते ॥ ४४ ॥
क्षेत्रेऽत्रैव पुरी रम्या, नरकान्ताभिधाऽभवत् । नरसेनो नृपस्तत्र, कुञ्जरश्रेणिशोभितः ॥ ४५ ॥
तत्पुरे गुणसारोऽभूत्सार्थवाहो महाधनी । गुणश्रीस्तत्प्रिया चासीत्पतिचित्तानुवर्त्तिनी ॥ ४६ ॥
दिनैः कतिपयैस्तस्य, दुर्दशायोगतः खलु । नरकच्युतैकजन्तुर्गुणश्रीकुक्षिमागतः ॥ ४७ ॥
तस्योत्पत्तिवशात्साऽथ, दोहदानशुभान् दधौ । पर्यधान्मलिनं वस्त्रं, कुत्सितान्नं च रोचते ॥ ४८ ॥
दानं नाहं ददाम्येव, कथमायान्ति मद्गृहे । भिक्षुका इत्यभूत्तस्या, उक्तिर्गर्भानुभावतः ॥ ४९ ॥
अभाग्यवशतस्तस्या, गुणसारः पतिर्मृतः । सकलापि गता लक्ष्मीर्जलस्थलगृहास्थिता ॥ ४५० ॥
यद् यस्य चटितं हस्ते, गृहीतं तेन तद्धनम् । अथ तस्मिन्सुते जाते, मृता माता कियद्दिनैः ॥ ५१ ॥
कृशः कपिलकेशश्च, कुब्जो वामन एव च । कुरूपो दुर्भगो बालः, सोऽभवत् पूर्वपातकात् ॥ ५२ ॥

कुटुम्ब सहृतं तेन, दयया पालितो जनै । सुगुण विगुण नैव, गणयन्ति दयालव. ॥ ५३ ॥
संवृत सकल तेन, तस्मात्कारणतो जनै । सवरोऽस्य कृत नाम, प्रसिद्ध वालकालत ॥ ५४ ॥
यत्रासौ याति तत्रोच्चैर्दुर्वाक्यैस्ताड्यते जनै । केषाचिद्गृहहट्टादौ, दौर्भाग्यात्प्राप न स्थितिम् ॥ ५५ ॥
वसति कुरुते यत्र, तत्र डिम्भै प्रपीड्यते । काकेभ्यो घूकवत्तेभ्य , पीडनं सहते स्म स ॥ ५६ ॥
राजद्वारे गत सोऽथ, ताड्यते द्वारपालकै । तारुण्येऽपि विरूप्य तत्र गत तस्य कर्मत ॥ ५७ ॥
इत्थ प्रवर्त्तमानेऽथ, कालेऽतिदुर्दशान्विते । दौर्भाग्यदु खतश्चित्ते, आत्मना स व्यचिन्तयत् ॥ ५८ ॥
अहो मे कीदृश पाप, वर्त्तते युगपद्यत । मातापित्रोर्विनाशोऽभूत्, कुटुम्बस्य च सम्पदाम् ॥ ५९ ॥
उक्तञ्च—उत्पद्यन्ते च हृद्येव, हृद्येव च विलिल्यिरे । अहो मे मन्दभाग्यस्य, रोरस्येव मनोरथा ॥४६०॥
मानिता न सुहृद्वाचो, गणितं नाम लाघवम् । जनवादाच्च नो भीत, कुलाङ्गारेण हा मया ॥ ६१ ॥
सौनिकेषु कृतघ्नेषु, व्याघ्रेषु व्रतलोपिषु । विश्वस्तघातकेष्वेषु, मत्समो नैव पापभाक् ॥ ६२ ॥
कषायविषयान्धेषु, तिर्यग्नरकगामिषु । प्रच्छन्नपापकार्येषु, ससारानन्तचारिषु ॥ ६३ ॥

अभव्येषु मदान्धेषु, मांसाशनरतेष्वपि । कुलमालिन्यकेष्वेषु, सत्तुल्यो नैव दुर्दशः ॥ ६४ ॥

वरमन्धो वरं मूर्खो, वरं कुष्ठी वरं कुणिः । वरं पक्षी वरं म्लेच्छो, नाहं कुलजमानवः ॥ ६५ ॥

युग्मम् ॥

काव्यम्–केचिज्जनाः सकलमेव जगत्समर्थाः, भर्त्तुं कुटुम्बमपरे तनुमात्रमन्ये ।
अस्मद्विधाः पुनरभाग्यभुजङ्गदष्टाः, शक्ता भवन्ति न निजोदरपूरणे च ॥ ६६ ॥

भ्रान्तं याचनतत्परेण मनसा देहीति वाक् प्रेरिता,
भुक्तं मानविवर्जितं परगृहे साशङ्कया काकवत् ।
साक्षेपं भ्रुकुटीकटाक्षकुटिलं दृष्टं खलानां मुखं,
तृष्णे देवि ! यदन्यदिच्छसि पुनस्तत्रापि कुर्मो वयम् ॥ ६७ ॥

दृष्टं दुर्जनचेष्टितं परिभवो लब्धः समानाज्जनात् ,
मित्रार्थे धनिनां कृतं सुललितं भुक्तं कपालेष्वपि ।

पद्भ्यामध्वनि सप्रयातमसकृत् सुप्त तृणप्रस्तरे,

यच्चान्यत्र कृत कृतान्त ! कुरु तत्तत्रापि सज्जा वयम् ॥ ६८ ॥

स पुनश्चिन्तयामास, पराभवगृहस्य मे । दुर्भगस्य स्थितिर्नैव, युज्यते नगरान्तरे ॥ ६९ ॥
विचार्यैव पुर त्यक्त्वा, ययौ यावद्वनान्तरे । गोपालैस्तत्र पाषाणैर्लकुटै कुट्टितस्तदा ॥ ४७० ॥
तेनानुमोदना चैव, चक्रे धृत्वा क्षमा तदा । रे जीव ! कृतकर्माणि, सहनीयानि सर्वथा ॥ ७१ ॥
दारिद्रदवदग्धानामाधिव्याधिधृतात्मनाम् । कृपणानामशक्ताना, गतिरेका क्षमोदिता ॥ ७२ ॥
गच्छन्सोऽग्रे महारण्ये, प्रविष्टो भवभीतिधृत् । सिद्धासने स्थितस्तत्र, दृष्टस्तेन मुनीश्वर ॥ ७३ ॥
मुनिना त समायात, दीनं वीक्ष्येति जल्पितम् । आगच्छागच्छ वत्सात्र, तच्छ्रुत्वा तेन चिन्तितम् ॥ ७४ ॥
अहो मे साम्प्रत किञ्चिद्भाग्य जागरितं खलु । आगच्छेति हि वार्त्ता प्राग्, नोक्ता केनापि मा प्रति ७५
मुञ्चन्नश्रूणि सोऽजल्पत्, लगित्वा मुनिपादयो । अद्य जात कृतार्थोऽह, भगवस्तव दर्शनात् ॥ ७६ ॥
बाहौ धृत्वाऽथ मुनिनाऽऽश्वास्य स्वस्थीकृतश्च स । वैराग्यविषये तस्य, प्रदत्ता चैव देशना ॥ ७७ ॥

यतः—दुखं स्त्रीकुक्षिमध्ये प्रथममिह भवे गर्भवासे नराणां,
बालत्वे चापि दुःखं मलमलिनतनुः स्त्रीपयःपानमिश्रम्।
तारुण्ये चापि दुखं भवति विरहजं वृद्धभावोऽप्यसारः,
संसारे रे मनुष्या ! वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥ ७८ ॥

संसार एष कूपः सलिलानि विपत्तिजन्मदुःखानि । इह धर्म्म एव रज्जुस्तस्मादुद्धरति निर्मग्नान्॥७९॥
दित्सा स्वल्पधनस्याप्यवष्टम्भः कष्टितस्य च। गतायुषोऽपि धीरत्वं, स्वभावोऽयं महात्मनः ॥ ४८० ॥
संवरः स्माह हे साधो !, दुःखं मेऽत्र भवे महत् । मुनिर्जगाद नृभवे, दुःखमेतत्कियत्तव ? ॥ ८१ ॥
नरके यानि दुःखानि, जीवैर्भुक्तान्यनन्तशः । लेशतस्तानि कथ्यन्ते, सावधानतया शृणु ॥ ८२ ॥
यतः—खण्डयन्ते तिलशो यत्र, कुट्टयन्ते वज्रमुद्गरैः । पच्यन्ते वह्निकुम्भीषु, छिद्यन्ते च शितासिभिः ८३
करपत्रैर्विदार्यन्ते, भक्ष्यन्ते लोककुर्कुरैः । महायन्त्रेषु पीडयन्ते, पाट्यन्ते, गलितं वपुः ॥ ८४ ॥
अयोरथेषु योज्यन्ते, आस्फाल्यन्ते शिलातले । क्षिप्यन्ते वह्निकुण्डेषु, स्नाप्यन्ते तप्तधूलिषु ॥ ८५ ॥

क्षेत्रस्वभावज नित्यमन्योऽन्येन कृत तु यत् । वेदयन्ति महादु'ख नारका गाढमत्सरा. ॥ ८६ ॥

ज्वरोष्णदाहो भयशोकतृष्णा, कण्डूबुभुक्षा अपि पारवश्यम् । शीतं पुनर्नारकिणामतीव, दश प्रकारा प्रभवन्ति पीडा ॥ ८७ ॥

तिरिया कसकुसारानिवायवहवन्धमारणसयाइ। नवि इहय पावता, परत्थ जइ नियमिया हुन्ता ॥८८॥

एव ससारदु खानि, श्रुत्वा वैराग्यतोऽथ सः। खड्गधारासम तीव्र, नी(ला)त्वा व्रतमपालयत् ॥ ८९ ॥

गुरुशिक्षा दधच्छीर्षे, गीतार्थ सोऽभवत् क्रमात् । तपासि प्रतिमादीनि, सर्वाण्येवाकरोत्पुन ॥ ४९० ॥

जिनकल्पधरो जात , पाण्मासिकतपोधर. । कायोत्सर्गेऽन्यदाऽरण्ये, स्थितोऽसौ मेरुवत्स्थिर ॥ ९१ ॥

स्वर्गे तदा सुरेशेन, तत्स्थिरत्व प्रशासितम् । मिथ्यादृष्टि सुर कश्चित्तत्प्रशसा न श्रद्दधो ॥ ९२ ॥

तेनैव कथित चाह, चालयामि द्रुत मुनिम् । मनुजे कि ? स्थिरत्व यद्देवैरपि न चाल्यते ? ॥ ९३ ॥

इत्युक्त्वाऽऽगात्सुरस्तत्र, स मुनिर्यत्र सस्थित । कृतस्तु मायया सार्थो, ग्रीष्मकालोऽवतारित ॥ ९४ ॥

मित्रस्यापि कठोरत्व, तृष्णावृद्धी रसत्रुटि. । जलवल्लभता ग्रीष्मे, कलिकाल इवाभवत् ॥ ९५ ॥

सार्थपो मुनिपार्श्वे स, समुदाययुतोऽवसत् । क्षुत्तृषार्त्तिर्मुनेर्देहे, सृष्टा देवेन मायया ॥ ९६ ॥
शीतलाम्बुकरम्बाद्यं, मुनेरग्रे त्वढौकयत् । नाग्रहीत्तन्मुनिः किञ्चित्, यत्षण्मासीतपोविधिः ॥ ९७ ॥
यामिन्यर्द्धे च देवेनातपं कृत्वेति भाषितम् । ममोपरि दयां कृत्वा, कायोत्सर्गं हि पारय ॥ ९८ ॥
सर्वान्नं प्रासुकं मेऽस्ति, त्वं तु प्रासङ्गिकोऽतिथिः । तच्छ्रुत्वा मुनिनाऽचिन्ति, निशायां कथमातपः ? ९९
मायया केन देवेन, क्रियते मत्परीक्षणम् । कायोत्सर्गं ततो नाहं पारयाम्यवधिं विना ॥ ५०० ॥
चतुर्विधाऽऽहारमुक्तः, कायोत्सर्गे स्थितो मुनिः । देवेन व्याघ्रसर्पाणामुपसर्गाः कृता घनाः ॥ १ ॥
नोपसर्गैश्चचालर्षिर्विरराम स्वयं सुरः । सानुकूलो हृष्टमनाः, प्रगटीभूय चावदत् ॥ २ ॥
प्रभो ! यादृक् सुरेन्द्रेण, वर्णितस्त्वं ततोऽधिकः । परीक्षितो मया यत्त्वं, क्षन्तव्यं तन्महामुने ! ॥ ३ ॥
किं वातैः प्रबलैर्विश्वैर्मेरुश्रृङ्गं हि चालितम् । इति स्तुत्वा पुष्पवृष्टिं, कृत्वा नत्वा सुरो गतः ॥ ४ ॥
षण्मासान्ते संवरर्षिश्चकार विधिपारणम् । तपसा लब्धयो जाता, अणिमाद्या अनेकशः ॥ ५ ॥
चिरं तीव्रतपस्तप्त्वा, प्रान्ते पक्षोपवासतः । मृत्वाऽभूत्सप्तमे कल्पे, इन्द्रसामानिकः सुरः ॥ ६ ॥

